वर्षम् - चतुर्थम् अङ्कः - चतुर्थः

# साहित्य-मीमांसा

## (साहित्यविभागीया शोधपत्रिका)

प्रधानसम्पादकः

आचार्यः प्रकाशपाण्डेयः

सम्पादकः

डॉ. सनन्दनकुमारत्रिपाठी

सहसम्पादकः

डॉ. अजयकुमार मिश्रः




साहित्य-विभागः

राष्ट्रियसंस्कृतसंस्थानम् ( मानितविश्वविद्यालयः )

भोपालपरिसरः, संस्कृतमार्गः, बागसेवनिया, भोपालम् ( म.प्र. ) 462043

# साहित्यमीमांसा

## (साहित्यविभागीया शोधपत्रिका)

संरक्षकः
प्रो. परमेश्वरनारायणशास्त्री
कुलपतिः
राष्ट्रियसंस्कृतसंस्थानम्, नवदेहली

प्रधानसम्पादकः
आचार्यः प्रकाशपाण्डेयः
प्राचार्यः
राष्ट्रियसंस्कृतसंस्थानम्,भोपालपरिसरः

सम्पादकः
डॉ. सनन्दनकुमारत्रिपाठी

सहसम्पादकः
डॉ. अजयकुमारमिश्रः




राष्ट्रियसंस्कृतसंस्थानम् (मानितविश्वविद्यालयः)
Accredited with 'A' Grade by NAAC
भोपालपरिसरः, संस्कृतमार्गः, बागसेवनिया
भोपालम् (म.प्र.) 462043

**प्रकाशकः**

**प्राचार्यः**
**राष्ट्रियसंस्कृतसंस्थानम् (मानितविश्वविद्यालयः)**
**भोपालपरिसरः, संस्कृतमार्गः, बागसेवनिया**
**भोपालम् (म.प्र.) 462043**
Email- bhojrajpanchang@gmail.com
Website – www.rsksbhopal.ac.in



**ISSN -**

**संस्करणम्** - **चतुर्थम् (2019)**

**मूल्यम्** - **200/-**

**आकल्पनम्** - **रोहित पचौरी**

**मुद्रकः** - एस. एम. सिस्टम
एम.पी.नगरम्, भोपालम्

**प्राप्तिस्थानम् –**
राष्ट्रियसंस्कृतसंस्थानम् (मानितविश्वविद्यालयः)
भोपालपरिसरः, संस्कृतमार्गः, बागसेवनिया, भोपालम् (म.प्र.) 462043
दूरभाषसंख्या- 0755-2418043, फैक्ससंख्या- 0755-2418003

**प्रकाश पाण्डेय**
प्राचार्य
राष्ट्रिय संस्कृत संस्थान
( मानित विश्वविद्यालय )
( मानवसंसाधनविकासमन्त्रालय, भारतशासनाधीन )
भोपाल परिसर, संस्कृत मार्ग, बागसेवनिया,
भोपाल - 462043 ( म.प्र. )




**Prakash Pandey**
Principal
Rashtriya Sanskrit Sansthan
(Deemed University)
(Under Ministry of H.R.D., Govt. of India)
Bhopal Campus, Sanskrit Marg, Bagsevaniya, Bhopal - 462043 (M.P.)

# मङ्गलवाक्

भारतीयसंस्कृतेः प्राणभूतायां संस्कृतभाषायां सन्निहितानां वेदवेदाङ्गदर्शनपुराणकाव्यादीनां प्रसाराय भारतशासनेन राष्ट्रियसंस्कृतसंस्थानस्य मानितविश्वविद्यालयस्य संस्थापना विहितेति नाऽविदितं प्रेक्षावताम्। उद्देश्यस्यास्य सम्प्राप्तये भोपालपरिसरस्य साहित्यविभागः प्रत्यब्दं साहित्यशास्त्रमधिकृत्य संगोष्ठीमायोजयति, यत्र देशस्य विभिन्नमहाविद्यालयविश्वविद्यालयेभ्यः समागता विद्वांसः साहित्यशास्त्रीयतत्त्वानि विमृशन्ति। ऐषमः साहित्यविभागेन 'संस्कृतकाव्यशास्त्रेऽलङ्कारप्रस्थानम्' इति विषयमधिकृत्य 2018 तमे ख्रीष्टाब्दे अक्टोबरमासे 5-6 दिनाङ्कयोः द्विदिवसीया राष्ट्रियसाहित्यशोधसंगोष्ठी समायोजिता, यत्र संस्कृतकाव्यशास्त्रस्य विश्वविश्रुतयशसां विदुषां व्याख्यानानि समभूवन्, विद्वद्भिः शोधच्छात्रैश्च शोधपत्राणि प्रस्तुतानि। प्रमुखाणां शोधपत्राणां सङ्कलनं विधाय परिसरीयसाहित्यविभागेन 'साहित्यमीमांसा' इत्याख्या पत्रिका प्राकाश्यं नीयत इति वीक्ष्य मोमुद्यते मे मनः। पत्रिकयाऽनया नूनमेव साहित्यशात्रीयालङ्कारतत्त्वजिज्ञासूनां विदुषां शोधच्छात्राणाञ्च मनस्तोषो भवेदिति दृढो मे विश्वासः।

पत्रिकाप्रकाशनावसरे पत्रिकाया अस्याः सम्पादकाय सहससम्पादकायान्येभ्यः साहित्यविभागीयप्राध्यापकेभ्यश्च ममङ्गलमाशंसमानः साहित्यविभागस्य सुमङ्गलायामार्ति कामये।

प्राचार्यः

# सम्पादकीयम्

“सर्वज्ञानमयो हि सः” इति मनुस्मृतिवचनेन वेदेषु बीजत्वेन दृश्यमानमलङ्कारप्रस्थानं संस्कृतकाव्यशास्त्रे रसप्रस्थानानन्तरम् अक्षिलक्ष्यीभवति। ततश्च रीतिध्वनिवक्रोक्त्यौचित्यानि षट् प्रस्थानानि कृतपदानि प्रसिद्ध्यन्ति। समेषां प्रस्थानानां भिन्नताया मूलं खलु प्राधान्यम्। सर्वप्रस्थानेष्वलङ्कारः केनापि रूपेण प्रवर्तत एवेत्यस्य व्यापकत्वम्। अलङ्कार एव प्रधानं काव्यस्यात्मेत्यलङ्कारवादिनां मतम्।

‘अलम्’ पूर्वकात् ‘कृ’धातोः ‘अलङ्क्रियतेऽनेन’, ‘अलङ्करोतीति’ ‘अलङ्करणम्’वेति व्युत्पत्त्या घञ्प्रत्यये निष्पन्नोऽलङ्कारशब्दोऽर्थद्वये प्रवर्तते सौन्दर्यार्थे सौन्दर्यसाधनार्थे च। वामनेन सौन्दर्यमलङ्कारं मत्वा तेनैव काव्यस्य ग्राह्यता प्रत्यपादि- ‘काव्यं “ग्राह्यमलङ्कारात्। सौन्दर्यमलङ्कारः।”(काव्यालङ्कारसूत्रम्) सौन्दर्यसाधनान्युपमादयोऽलङ्काराश्चेद् यथा कटककुण्डलादयो वपुरलङ्कुर्वन्ति तथानुप्रासोपमादयोऽलङ्कारा अपि शब्दार्थवपुः काव्यम्। काव्यस्य प्रधानं तत्त्वमलङ्कार इत्यग्निपुराणभामहोद्भटदण्डिप्रभृतयः। किन्तु ध्वनिकारेणानन्दवर्धनेनालङ्काराङ्गित्वं निरस्य ध्वन्यात्मवादः प्रतिष्ठापितः। तथापि तेनालङ्कारं ध्वनिं मत्वा तन्महत्त्वं द्योतितमेव।

कुन्तकेन वैदग्ध्यभङ्गीभणितिरूपा वक्रोक्तिरेव काव्यजीवितं स्वीक्रियते। अग्निपुराणकारमते वक्रोक्तिः, रीतिरौचित्यञ्चालङ्कार एव। एवं वक्रोक्तिः, रीतिः, रस इत्यादयोऽलङ्कारमेव समाविशन्ति। अतोऽलङ्कारप्रस्थानस्यास्ति किमपि विशिष्टं व्यापकञ्च महत्त्वम्। अत एव चालङ्कारस्य प्राधान्येन साहित्यशास्त्रस्यालङ्कारशास्त्रमित्यभिधानं सङ्गच्छते।

आनन्दवर्धनमम्मटादयोऽलङ्काराणां काव्यशोभाधायकत्वं मत्वापि तेषां काव्ये बहिरङ्गत्त्वमेव साधयन्ति। अलङ्काराणां विनिवेशनं रसदृष्ट्या एव करणीयम्, नतु तदर्थं पृथग्यत्नः कार्यः। मम्मट-विश्वनाथ-जगन्नाथादिभिराचार्यैरनयैव दृष्ट्यालङ्कारलक्षणानि कृतानि।

काव्यशास्त्रे भामहस्य काव्यालङ्कारः, उद्भटस्य काव्यालङ्कारसारसंग्रहः, वामनस्य काव्यालङ्कारसूत्रवृत्तिः, रुद्रटस्य काव्यालङ्कारः, रुय्यकस्यालङ्कारसर्वस्वम्, अप्पयदीक्षितस्य चित्रमीमांसा कुवलयानन्दश्च, विश्वेश्वरपाण्डेयस्यालङ्कारकौस्तुभः,

अलङ्कारमुक्तावलिरलङ्कारप्रदीपश्चेत्यादयोऽलङ्कारविवेचनपरा आचार्यास्तद्ग्रन्थाश्च राराज्यन्ते।

आधुनिकेषु पुनरप्यलङ्कारप्रस्थानमुजृम्भमाणं दृश्यते। तत्राचार्यरेवाप्रसादद्विवेदी, आचार्याभिराजराजेन्द्रमिश्रः, आचार्यराधावल्लभत्रिपाठी च प्रसिद्धाः। वामनोक्तं "सौन्दर्यमलङ्कार" इति मतमादाय पुनरपि सनातनकविराचार्यद्विवेदी त्रिपाठिवर्यश्चालङ्कारप्रस्थानमुज्जीवयन्तौ प्रतीयेते। अस्यां दिशि द्विवेदिवर्यस्य काव्यालङ्कारकारिका, साहित्यालङ्कारः, साहित्यशारीरकञ्च; मिश्रवर्यस्य अभिराजयशोभूषणम्, त्रिपाठिवर्यस्य च अभिनवालङ्कारसूत्रं साहित्यवृक्षकारिका चेत्यादयो ग्रन्था महत्त्वपूर्णं पदमधिकुर्वन्ति। एवमाप्राचीनकालादद्यावधि संस्कृतकाव्यशास्त्रेऽलङ्कारप्रस्थानस्य महत्त्वं कृतपदं विलोक्यते।

एवं संस्कृतकाव्यशास्त्रेऽलङ्कारप्रस्थानमाहात्म्यं दर्शं दर्शं राष्ट्रियसंस्कृतसंस्थानस्य भोपालपरिसरस्य साहित्यविभागेन 2018 तमे ख्रीष्टाब्दे अक्टोबरमासस्य 5-6 दिनाङ्कयोः 'संस्कृतकाव्यशास्त्रेऽलङ्कारप्रस्थानम्' इति विषयमधिकृत्य द्विदिवसीया राष्ट्रियशोधसंगोष्ठी समायोजिता। संगोष्ठ्यामस्यां संस्कृतजगतो महनीयानां विपश्चिदपश्चिमानां प्रो.राधावल्लभत्रिपाठिनां प्रो.रामलखनपाण्डेयमहोदयानां प्रो.रामकुमारशर्मादीनां व्याख्यानानि समभूवन्। अनेकैर्विद्वद्भिः शोधच्छात्रैश्च शोधपत्राणि पठितानि। ततः कांश्चन शोधलेखान् संङ्गृह्य साहित्यमीमांसाख्या साहित्यविभागीया पत्रिकेयं प्रकाश्यते। प्रकाशनावसरे एतत्प्रेरकेभ्यः राष्ट्रियसंस्कृतसंस्थानस्य कुलपतिभ्यः भोपालपरिसरस्य प्राचार्यचरणेभ्यश्च प्रणामाञ्जलिं विनिवेदयन् संगोष्ठ्याः सहयोगिभ्यो डॉ. धर्मेन्द्रकुमारसिंहदेवाय, डॉ. अजयकुमारमिश्राय, डॉ. मोहिनीअरोरायै, डॉ. संगीतागुन्देचायै च पुनः पुनर्धन्यवादान् वितरन् अक्षरसंयोजकं श्रीरोहितपचौरिणञ्चाशीराशिना संयोजयन् विरमामि।

सम्पादकः

# विषयसूची

# नाट्यशास्त्रीय-काकुस्वरूप-विज्ञानम्

-प्रो. आजादमिश्रो 'मधुकरः'

नाट्यशास्त्रस्य सप्तदशेऽध्याये आदौ पात्राणां यथाकर्म नामविधानं भाषाविधानं च निर्दिश्य आचार्यो भरतः वाचिकाभिनयम् उपस्कर्तुं नाट्यप्रयोगे पाठ्योपकारकान् गुणान् विस्तेरण विभागशो विवृणोति आध्यायपरिसमाप्तेः। तद्यथा- सप्त स्वराः, त्रीणि स्थानानि, चत्वारो वर्णाः, द्विविधा काकुः षडलङ्काराः, षडङ्गानि- इति षड् गुणाः उपकारकाः भवन्ति पाठ्यस्य वाचिकस्य। तत्र षड्जादि- सा- रे-ग-म-प-ध- नीत्यादयः सप्त स्वराः प्रसिद्धाः सन्ति। एतेषां सप्तस्वराणां मन्द्रमध्यतारेति नाम्ना त्रीणि सप्तकानि भवन्ति। तस्य सप्तकत्रयस्य स्थानानि क्रमेण उरः, कण्ठः, शिर इति प्रथितानि सन्ति। उदात्तः, अनुदात्तः, स्वरितः, कम्पितश्चेति चत्वारो वर्णधर्माः इह पाठ्यप्रयोजनवशाद् ग्राह्याः सन्ति।

एते सप्त स्वरा उरआदिस्थानानि उदात्तादिवर्णधर्माश्चेति त्रयोऽपि काकोः स्वरूपनिष्पत्तेराश्रयाः सन्तः तदुपकारिणो भवन्ति। तत्र स्वरः काकोः स्वरूपं निष्पादयति, उरआदिस्थानं मन्द्राद्याश्रयं निर्धारयति, उदात्तादिवर्णधर्माश्च तस्य रक्तिप्रधानत्वरूपगेयत्व-व्यवच्छेदेन पाठ्यत्वं निश्चिन्वन्ति। एवञ्च पूर्वमुपक्रान्ता एते त्रयोऽपि काकोः स्वरूपाश्रय- पाठ्यत्वनिष्पादकत्वेन तदुपकारिणो भवन्ति।

गुणेषु काकोरनन्तरं षडलङ्काराः षडङ्गानि चोद्दिष्टानि। तत्र 'उच्चो दीप्तश्च मन्द्रश्च नीचो द्रुतविलम्बितौ' इति षडलङ्काराः भवन्ति तथा विच्छेदः, अर्पणम्, विसर्गः, अनुबन्धः, दीपनम्, प्रशमनम् इत्यङ्गानि षट् कथितानि। एतावङ्गालङ्कारौ काकोरभिव्यक्तौ विभावमर्थं रसं च परिपोषयतः। अर्थाद् एतावपि पश्चाच्चोद्दिष्टौ अङ्गालङ्कारौ अन्ये च पूर्वोक्तास्तस्य परिकरभूताः सहायका भवन्ति। एते पञ्चापि गुणा मिलित्वा पञ्चमीं काकुमेव पूरयन्ति। तदुक्तमभिनवभारतीव्याख्यायाम्-'एवं परमार्थतः काकुरेवेयं पञ्चमी रूपान्तरैः पूर्णीक्रियते। काक्वा च पाठ्यमानस्य स्वोचितचिज्जडस्वरूपार्थाभिख्येन नयनेन अभिनेयता नीयते' इति।

अथ का तावत् काकुरिति प्रश्नस्योत्तरं विचारयामः। नाट्यस्य पाठ्यं द्विधा श्रावयितुं शक्यते-(1) काव्यपाठरूपेण (2) नाटकीयभूमिकायां पात्राभिनयरूपेण च।

**पाठ्यवाचनम्-**

तत्र काव्यपाठे पाठकस्य वाचकस्य प्रायः सामान्यो अविकृतो ध्वनिः श्रूयते। स च वाचकः स्वस्य सामान्यध्वनौ यत्रकुत्रचिद् किञ्चिद् विकारमुत्पाद्य प्रश्नाद्यर्थं व्यङ्ग्यार्थं वा प्रत्याययति। तदा तस्य वाचकस्य शोकावेगभीत्यादिजन्यः स वैकृतध्वनिः- अथवा ध्वनिविकार एव काकुध्वनिः-, साकाङ्क्षा काकुरिति वाभिधीयते। तया काक्वा वाच्यातिरिक्तो व्यङ्ग्यार्थ आक्षिप्यते प्रश्नाद्यर्थो वावगम्यते। उदाहृतं च काक्वाक्षिप्तं गुणीभूतं व्यङ्ग्यं काव्यप्रकाशस्य पञ्चमोल्लासे मध्यमकाव्यप्रसङ्गे-

**मथ्नामि कौरवशतं समरे न कोपात्,**
**दुःशासनस्य रुधिरं न पिबाम्युरस्तः।**
**संचूर्णयामि गदया न सुयोधनोरू,**
**सन्धिं करोतु भवतां नृपतिः पणेन।।**

वेणीसंहारे प्रथमाङ्के सन्धिश्रवणकुपितस्य भीमसेनस्य सहदेवं प्रत्युक्तिरियम्। अत्र प्रतिज्ञातकुरुकुलक्षयस्य भीमसेनस्य 'न मथ्नामि' इत्युक्तिर्विरूद्धा, अतः'नञि' काकुः प्रतीयते। तया च काक्वा नञर्थान्तरं प्रतीयमानं 'मथ्नाम्येव' इत्यवधारणं गम्यते। अत्र कोपावेगात् नञि वैकृतध्वनिः काकुं गमयति। एवमेमेह चतुर्ष्वपि पादेषु विपरीतार्थो व्यज्यते। तत्र चतुर्थे पादे 'करोतु' इति पदे काक्वा 'माकरोतु'इत्यर्थान्तरं बोध्यम्। एवञ्च काक्वा अर्थान्तरप्रतीतौ पूर्वप्रतिज्ञातविषयज्ञानं कारणम्। अत इह साकाङ्क्षा काकुर्विज्ञेया।

अभिनवभारतीव्याख्यायां पुनः साकाङ्क्षायाः काकोः त्रीणि उदाहरणानि दर्शितानि। तत्र प्रथमं तावत्- 'यद् रामेण कृतं तदेव कुरुते द्रोणात्मजक्रोधनः' इति। इह साकाङ्क्षाकाक्वा 'रामकर्तृकरावणैकवधादपि अधिकं वधं कुरुते' इत्यर्थान्तरं गम्यते।

तत्र द्वितीयो दृष्टान्तो यथा-

**स एव दशकन्धरं कृतवतोऽपि कक्षान्तरे,**
**गतः स्फुटमबन्ध्यतामधिपयोधि सान्ध्यो विधिः।**
**तदात्मज इहाङ्गदः प्रहित एष सौमित्रिणा,**
**क्व स क्वस दशाननो ननु निवेद्यतां राक्षसाः!**

इह श्लोके 'तदात्मज इहाङ्गदः' साकाङ्क्षा काकुः स्वगतान् बालिपुत्रोचितान् विशेषान् अर्पयति यद् यस्य पिता तादृशः कक्षीकृतदशकन्धरः, तस्य पुत्रः ततोऽप्यधिकः इति भावः।

तृतीयं चोदाहरणम्-'स्वस्था भवन्ति मयि जीवति धार्तराष्ट्राः' इति भीमसेनस्योक्तिरियम्। इह वाक्येन सम्भावना विधीयते, किन्तु साकाङ्क्षा काकुस्तस्यां सम्भावनायां निषेधमर्पयति।

इत्थमिह सर्वेषु उदाहरणेषु वाक्ये पाठ्माने ध्वनिधर्मविशेषः, अथवा शिरस्तच्चक्षुर्हस्तादि-निर्देशपूर्वकं शोकावेगभीत्यादिजन्यो वैकृतो ध्वनिरेव काकुः इति स्पष्टम्। तदुक्तम् अभिनवभारतीव्याख्याने- 'एवम्भूतो यः---ध्वनिधर्मविशेषः- सा काकुः। यदि वा सामानाधिकरण्येनैव व्याख्येयम्। धर्मो हि न स्वतन्त्रो भाति, अपितु धर्मिनिष्ठ एवेति।'

अमरकोशेऽपि काकुशब्दार्थो वर्णितः-'काकु- स्त्रियां विकारो यः शोकभीत्यादिभिर्ध्वनेः' इति। शोकावेगकामक्रोधभीतिजुगुप्सादिभिर्ध्वनेर्यो विकारः सा काकुरित्यन्वयः। 'कक लौल्योपतापयोः' इत्यस्मात् कक्यते इत्युणि काकुरिति पदं निष्पद्यते। 'कक लौल्ये,'लौल्यं गर्वश्चापल्यं चेति दीक्षिताः। 'काकुर्ध्वनेर्विकारः' इति काव्यप्रकाशबालबोधिन्यां भट्टवामनाचार्यः। साहित्यदर्पणस्य लक्ष्मीव्याख्यायामाचार्यः कृष्णमोहनशास्त्री परिभाषते- 'काकुः उच्चारणेन शिरश्चालनसहकृतध्वनिविशेषः' इति। स आचार्यः काक्वाक्षेपस्य उदाहरणान्तरम् अपि दर्शयति-

**तथाभूतां दृष्ट्वा नृपसदसि पाञ्चालतनयाम्,**
**वने व्याधैः सार्द्धं सुचिरमुषितं वल्कलधरैः।**
**विराटस्यावासे स्थितमनुचितारम्भनिभृतम्,**
**गुरुः खेदं खिन्ने मयि भजति, नाद्यापि कुरुषु।**।इति।

इह 'मयि न योग्यः खेदः, कुरुषु तु योग्यः' इति काक्वा प्रतीयमानो भिन्नोऽर्थः। अस्तु।

**पाठ्याभिनयः-**

एतावता वाक्प्रपञ्चेन नाट्यपाठ्यस्य काव्यपाठविधया प्रस्तुतीकरणेऽपि साकाङ्क्षायाः काकोः प्रयोगो भवतीति समुदाहृतं काव्यशास्त्रदृष्टान्तैः। तत्र सर्वत्र साकाङ्क्षकाक्वा भिन्नोऽर्थ आक्षिप्यते, अतः सा अर्थकाकुः विभावककाकुर्वा इत्यपि व्यपदिश्यते इत्यवधेयम्। यदा च नाट्यपाठ्यस्य रङ्गमञ्चे नाटकीयपात्रभूमिकायाम् अभिनयविधया प्रयोगः

प्रस्तूयते, तदा सर्वमपि तन्नाट्यपाठ्यं काकुरेव भवति। तदा सर्वाण्यपि तानि-तानि नाट्यवाक्यानि वैकृतध्वनिभिरूपस्थापनीयानीति काकुरूपाण्येव तानीति विनिगमनीयम्।

अयम्भावः- रङ्गमञ्चे नटः पूर्वस्वभावेन वाक्यं नोच्चारयति, अपितु राजभूमिकायां राजा इव गभीरं धीरं शान्तं च वाक्यध्वनिं करोति। स एव सामान्यो नटः विदूषकभूमिकायां पूर्ववर्तिनं स्वकीयं, स्वभावं परित्यज्य रङ्गमञ्चे चापल्यं बाधितचातुर्यं कृतकसाहसत्वं विनोदकरत्वं च भजते, तदनुकूलेन ध्वनिविशेषेण वाक्योच्चारणं च करोति। स एव सामान्यो नटः कञ्चुकीयभूमिकायां पूर्वरूपपरित्यागेन वाक्यध्वनौ विकारमुत्पाद्य वृद्धत्वम् अभिनयति। अर्थात् सर्वेऽपि कुशीलवाः स्त्रीपुंसाः रङ्गमञ्चे तत्तत्पात्रभूमिकानुसारेण आत्मध्वनि-परित्यागेन तत्तत्पात्रध्वनिविशेषं प्रयुञ्जते। अतस्तेषां तासां वा सर्वाण्यपि वाक्यनि काकुभूतान्येव। तत्र सर्वोऽपि वाक्यध्वनिः वाक्यस्वरो वा काकुरिति विज्ञेयम्। वस्तुतः काकुं विना कुशीलवानां वाच्यभूमिरेव न संपद्येत। अत एव काकुशब्दस्य व्युत्पत्तिं विदधताचार्याभिनवगुप्तेन नाट्यशास्त्रस्य विवृतौ व्युत्पादितम्- 'कक लौल्ये,लौल्यं च साकाङ्क्षे, यया स्वरवैचित्र्यं लक्ष्यते ईषद् यतो वाच्यभूमिः संपद्यते सा काकुः, ईषदर्थे कुशब्दस्य कादेशः'काकुर्वा जिह्वा तद्व्यापारसंपाद्यत्वात् काकुः'- इति। एवञ्च रङ्गमञ्चे जिह्वाव्यापारसम्पाद्यो यो नाट्यपाठ्यवाक्यध्वनिविशेषः स सर्वोऽपि काकुरेव।

**नाद-काकु-भेदः**

अत्रेदमवधेयम्- काकुरियं केवलो वर्णपदवाक्यविहीनो ध्वनिकाररूपो नादो नास्ति। नादो हि प्रथमेन संवित्स्पन्देन प्राणोल्लासनया वर्णादिरूपविशेषहीनो यद्यपि वाग्रूपः एव। सोऽपि हर्षशोकादिचित्तवृत्तिं विधिनिषेधाद्यभिप्रायं वा तत्कार्यलिङ्गतया वा तादात्म्येन वा श्रवणद्वारा बोधयति। यथा च प्राण्यन्तरस्य मृगसारमेयादेरपि नादमाकर्ण्य भयरोषशोकादि प्रतिपद्यते। तथापि सोऽयं चित्तवृत्त्यादिप्रत्ययः तस्माद् नादादनुमीयते। एवञ्चेदं विधिनिषेधज्ञानं हर्षशोकादिचित्तवृत्तिज्ञानं वानुमानम्, न तु शाब्दबोधः इत्यवधेयम्।

काकौ पुनः नादेन सह वर्णविशेषाः भवन्ति। ते च नादेन अनुस्यूताः ग्रन्थिभूता अखण्डपदवाक्यरूपाः वर्णविशेषाः शक्त्यादिप्राच्यप्रयत्नेन सह स्थानालङ्कारादिनिमित्तेन अनभिप्रेतेऽर्थेऽन्यथापि प्रयोक्तुं शक्यन्ते। यथा- 'स्वस्था

भवन्ति मयि जीवति धार्तराष्ट्राः' इत्यादौ स्वस्थधार्तराष्ट्रकर्तृकसत्ता अनभिप्रेता, अभिप्रेतस्तु तदभावः।

परमिह साकाङ्क्ष- काकोर्महिम्ना विधिमुखः अन्यथाप्रयोगोऽपि अभिप्रेतार्थं प्रतिषेधं प्रत्याययति। केवलेन नादेन त्विह एतादृशो विधिनिषेधाद्यभिप्रायो नावगम्यते। किञ्च साकाङ्क्षकाकुस्थले स्थानालङ्कारादिनिमित्तवशात् शक्त्यादिप्राच्यप्रयत्ननिमित्तानां वाच्यार्थातिरिव्यङ्ग्यार्थप्रतीत्या व्यभिचारोऽपि स्फुटतया दृष्ट एव। किन्तु केवलो नादो नान्यथासिद्धो मन्तव्यः। यतो हि नादश्रवणात् श्रोतुः झटिति मुखरागः पुलकादिश्च उदभिद्यते, तेन तस्य हर्षशोकभीत्यादयोऽनुमीयन्ते। अवगताश्च ते तस्य श्रोतुः अन्यथासिद्धं शब्दार्थं बाधन्ते। एवञ्च नान्यथाप्रसिद्धो नादः अन्यथासिद्धं शब्दार्थं क्वचिद् बाधते एव। यथा- भयमापन्नोऽपि जनः 'भीरुः! न मे भयम्' इति ब्रुवन् नाशयते भयम्? किंवा अन्य- प्रकारतां वा वाक्यार्थस्य विशेषार्पणेन विधत्ते। स्पष्टमिह स वक्ता स्वस्य भयमेव प्रकारान्तरेण अर्थात् निषेधमुखेन आख्याति। एवञ्च नादकाक्वोरुभयोरपि सा केवलाद् वर्णविहीनाद् नादात्सर्वथा भिन्ना सती रङ्गप्रयोगदशायां नाट्यपाठ्ये सर्वत्र प्रयोज्यमाना अर्थं विभावयति रसञ्चास्वादयति।

**काकुस्वरूपोत्पत्तिः**

तस्याः काकोः स्वरूपनिर्धारणाय नाट्यपाठ्यगुणेषु स्वरसप्तकम् आचार्येण प्रथममुद्दिष्टम्। अत्रायमभिसन्धिः- नाट्यप्रयोगारंभे तावत् प्रयोगस्य प्राणभूतं ध्रुवागानमादौ विधीयते। तस्मिन् गाने गाता यद्यपि सप्तकानाम् अनेकस्वरान् प्रयुङ्क्ते, तथापि तत्र कश्चित्स्थायिस्वरो मुख्यो भवति। तं स्थायिस्वरं प्रमुखीकृत्य अभिनेता पाठ्यकाकुम् उद्भावयेत् इति यावत्त्स्वराभिधानस्य प्रयोजनमिह विज्ञेयम्। तदुक्तमभिनवभारत्याम्- 'एवमुपगानवैलक्षण्ये सम्पन्ने बाह्यार्थसमर्पणेन चित्तवृत्तिसमर्पणतया वा अभिनयानुभावरूपतालाभाय काकुः अर्थरसभेदादभिधीयते' इति। एवञ्च काकुध्वनेः स्वरनिर्धारणाय यथा पाठ्यगुणेषु स्वरसप्तकस्य परिगणनं तथैव तस्य सप्तकस्वरस्य तारमध्यमन्द्रेति स्थानं निश्चेतुं 'शिरःकण्ठोर' इति त्रीणि स्थानानि तत्र द्वितीयक्रमे परिगणितानि। अथच स काकुध्वनिः गेयो गानरूपो नास्तीति बोधयितुं तत्र पाठ्यगुणेषु तृतीयस्थाने उदात्तादिवर्णधर्मचतुष्टयस्य परिगणना कृता। एवञ्च एते स्वर – स्थान- वर्णधर्माः त्रयोऽपि पाठ्यगुणाः काकुध्वनेः स्लरूपं निर्धारयन्ति, उद्भावयन्ति, निष्पादयन्तीति स्पष्टं बोध्यम्। एवमेव पाठ्यगुणाः काकोरनन्तरं

पठितावङ्गालङ्कारावपि गुणौ काकुध्वनिं दीपयन्तौ काक्वर्थं व्यञ्जयतः तद्रसं च निर्बाधमास्वादयतः। अर्थात् काक्वर्थाभिव्यक्तौ तद्रसनिष्पत्त्रत्तौ चोपकारकौ भवतः।

**पाठ्यगुणानां काकुरूपता**

एवञ्च पाठ्यगुणेषु काकुरेव प्रधानम्। तदन्ये पञ्चापि गुणास्तत्परिकरभूताः इति उक्तपूर्वम्। अत एव अध्यायसमाप्तिपर्यन्तं सर्वत्र कारिकासु काकुरूपत्वमेवानुवर्तते, मुख्यरूपत्वस्यैव सर्वत्रानुवर्तनात्। अत एव उच्चदीप्ताद्यलङ्कारेष्वपि उत्तरत्र कारिकासु काकुशब्देनैव मुनेर्व्यवहारो दृश्यते। किञ्च इह अलङ्कारपदे अलमिति पर्याप्त्यर्थः, न भूषणार्थः। अर्थात् षडलङ्काराः काकोः पर्याप्तिं परिपूर्णताम् आपादयन्ति। अत एवाध्यायान्ते उपसंहारकारिकायाम् 'उक्तं काकुविधानम्' इति निर्दिष्टं यथा-

**उक्तं काकुविधानं तु यथावदनूपूर्वशः।**
**अत ऊर्ध्वं प्रवक्ष्यामि दशरूपविकल्पनम्।।150।।**इति।

यस्योपसंहारः तस्यैवोपक्रमो निरूपणं चोचितं समञ्जसं भवति। काकोः प्राधान्याङ्गीकारे अन्येषां च गुणानां परिकरत्वे मुनिकर्तृकोपसंहारोऽयं संगच्छेत। अन्यथा अङ्गषट्क-मध्यपतितस्योपसंहारः अन्याङ्गनिरूपणं चाभिधानमिति सर्वमसमञ्जसं स्यात्। तस्मात् काकुरेव प्रधानमित्यर्थेऽभिनवगुप्तः स्वोपाध्यायान् प्रमाणरूपेण उपन्यस्यति- 'उपाध्याया हि वचनस्य संकेतितमर्थमन्यथाकारं समर्थयन्ति'- इति।

**काकुभेदः**

काकुरियं द्विविधा प्रोक्ता भरतमुनिना। तथाहि सूत्रं तस्य-

'द्विविधा काकुः साकाङ्क्षा निराकाङ्क्षा चेति,

वाक्यस्य साकाङ्क्षनिराङ्क्षत्वात्'।।109।।

पुनश्च मुनिः साकाङ्क्षपदार्थं परिभाषते-

**अनियुक्तार्थकं वाक्यं साकाङ्क्षमिति संज्ञितम्।**
**नियुक्तार्थं तु यद्वाक्यं निराकाङ्क्षं तदुच्यते।।110।।**इति

तत्र अनियुक्तार्थकम् वक्तुरनभिप्रेतार्थकं वाक्यं साकाङ्क्षा च वक्तृगता वाक्ये उपचर्यते। सा च अभिप्रेता आकाङ्क्षा प्रकरणादिबलान्निश्चीयते। अभिप्रेतार्थश्च आकाङ्क्षायाः तत

एवावगम्यते। एतादृशी च काकुः साकाङ्क्षा प्रोक्ता। यत्र वाक्यात् संकेतितार्थेन सह काव्याक्षिप्तस्य व्यङ्गयार्थस्यापि प्रतीतिर्जायते। अस्या बहूनि उदाहरणानि पूर्वं काव्य-प्रकाशात् साहित्यदर्पणात् अभिनवभारती- व्याख्यानाच्च समुद्धृतानि।

निराकाङ्क्षं तु तद्वाक्यम्, यस्मात्संकेतबलेन यादृशोऽर्थः प्रतीयते तादृश एव यत्र न्यूनाधिकः प्रमाणबलेन निर्णययोग्यः। तदेव वाक्यं नियुक्तार्थं संकेतितार्थकमुच्यते। तत्र काकुः निराकाङ्क्षा प्रोक्ता। तस्या उदाहरणं तु साकाङ्क्षकाकुवाक्यं वर्जयित्वा प्रयोगे सर्वमपि नाट्यपाठ्यं बोध्यम्। यथा- बालं लालयन्ती लल्लनमन्मनभावा माता वक्ति- 'वत्स! एनं शावकं मुञ्च मुञ्च। इमां शकटिकां गृहाण। पश्य पश्य, इयं वेगेन धावति' इत्यादीनि सर्वाणि नाट्यपाठ्यानि गद्य- पद्यमयानि अस्या उदाहरणानि सन्ति।

**षडलङ्काराः**

वस्तुतः प्रयोगे वाचिकाभिनये सर्वमपि गद्यपद्यमयं पाठ्यं काकुध्वनिभिरेव अभिनेयं भवति, अन्यथा तस्याभिनयरूपता न सिद्ध्येत्। काकुं तु स केवलः काव्यपाठः काव्यवाचनमेव वा स्यात्। अतः अभिनयपाठ्ये तु सर्वत्र काकुस्वर एव प्रवर्तते। तत्र साकाङ्क्षकाकौ निराकाङ्क्षकाकौ च यादृशः स्वरः, यत्र च विरामः अपेक्षितः ,तत्सर्वं मुनिना पूर्वं सूत्ररूपेण पश्चाच्च कारिकासु किञ्चिद् विस्तरेण परिभाषितं वर्तते। तत्र स्वरो गतिश्च षडलङ्कारेषु निर्दिष्टौ स्तः। यथा-

**उच्चो दीप्तश्च मन्द्रश्च नीचो द्रुतविलम्बितौ।**
**पाठ्यस्यैते ह्यलङ्कारा लक्षणं च निबोधत।।112।।**

इह चतुर्विधः स्वरः द्विविधा च लयगतिः इति षडलंकाराः पाठ्यस्य प्रोक्ताः। तदिह लक्षणसूत्राणि-

(1) उच्चो नाम शिरःस्थानगतस्तारस्वरः। स च दूरस्थाभाषण- विस्मय- उत्तरोत्तर- संजल्प- दूराह्वान-त्रासना- बाधाद्येषु।

(2) दीप्तो नाम शिरःस्थानगतस्तारतरः। स च आक्षेप-कलह-विवाद-अमर्ष-क्रुष्टाधर्षण क्रोधशौर्यदर्प- तीक्ष्णरुक्षाभिधान-निर्भर्त्सनाक्रन्दितादिषु।

(3) मन्द्रो नाम उरःस्थानगतः। निर्वेदग्लानिचिन्तौत्सुक्य-दैन्य व्याधि-व्रीडा-गाढशस्त्र-क्षत-मूर्च्छा-मद- गुह्यार्थवचनादिषु।

(4) नीचो नाम उरःस्थानगतः मन्द्रतरः। स च स्वभावाभाषण-व्याधि-शम-श्रमार्त-त्रस्त-पतित-मूर्च्छितादिषु।

(5) द्रुतो नाम कण्ठगतः, स च त्वरितः। लल्लन-मन्मन-भय-शीतज्वर-त्रास-आयस्त(आवेग)-आत्ययिककार्य (शीघ्रसम्पाद्य कार्य)- आवेदनादिषु।

(6) विलम्बितो नाम कण्ठस्थानगतः तनुमन्द्रः। स च शृङ्गार-करुण-वितर्कित-विचार-अमर्ष-असूयित-अव्यक्तार्थ-प्रवाद-लज्जा-चिन्ता-तर्जन-विस्मय-दोषानुकीर्तन-दीर्घ-रोग-निपीडनादिषु।।114।।इति।

**काकोरवान्तरभेदाः**

एतेषु षट्त्सु सूत्रेषु अलंकारलक्षणं विधाय आचार्यो भरतः कुशीलवपरम्परायां प्रचलितैः पञ्चदशश्लोकैः लक्षणविषयमेव विशकलनेन विवृणोति। इह चान्तिमकारिकाया अन्तिमेन पादेन अलंकारप्रयोगममुपसंहरति, यथा-

**एवं भावरसोपेतकाकुः कार्या प्रयोक्तृभिः।।29**।।इति।

इत्थञ्च सर्वत्र वाचिकाभिनयप्रयोगे काकुः कार्याभिनेतृभिः। अतः सर्वोऽपि वाचिकाभिनयः काकुमयः। तस्मात् ताद्धर्म्यात् नाट्यपाठ्यं काकुरिति स्थितिः। तत्र रसनिष्पादकवाक्ययेषु रसकाकुः, इतिवृत्तार्थबोधकवाक्येषु अर्थकाकुः विभावकाकुर्वा बोध्या। तथा यदा अभिनेतृणां स्वगतभाषणे गुह्यभाषणे 'कर्णभाषणे' वा वाक्यभ्यः कश्चिदर्थो नावबुध्यते, केवलं स्वर एव कश्चिच्छ्रूयते, तेनानुमीयते, तदा तत्र स्वरकाकुरिति त्रिविधं भेदं काकोर्व्याख्यातवन्तः आचार्याः।

किञ्च साकाङ्क्षकाकावपि एते त्रयो भेदा भवन्ति। तत्र यद्यपि स्वरकाकुर्न भवति तथापि तत्र स्वरकाकोरेव कश्चिद् भेदः श्रुतिकाकुरङ्गीकृतः, आक्षेपे स्वरस्यैव प्रकर्षसद्भावात्। तदुक्तमभिनव-भारत्याम्- 'स्वरकाकोरेव श्रुतिकाकुश्चेति भेदेन शिरस्येव उर्ध्वस्तारतम-आक्षेपादौ। तारशब्दः प्रकर्षोपलक्षणम्। अत्र ह्याक्षेपादौ यथावस्थं श्रुति-विभाव-रस-काकुरिति भेदत्रयं विभजनीयम्'- इति।

अत्रावधेयम्- रङ्गप्रयोगे नेपथ्यपाठः, वैतालीयपाठः, दूरस्थाभाषणम्, कञ्चुकिकर्तृकसूचना वा प्रदर्श्यते। तत्र सर्वत्र अर्थ-रस-स्वरान्यतमा काकुर्भवति। स सर्वोऽपि नेपथ्यपाठादिः काकोर्विषयः। यैर्वाक्यैः किमपि वृत्तमभिधीयते, अर्थकाकुः सा। यैश्तित्तवृत्तिः द्रवति. सा रसकाकुः। यैश्च दूरस्थवाक्यैः अर्थावबोधो नैव जायते, अपितु स्वरमात्रं श्रूयते, सा स्वरकाकुः बोध्या। विषयोऽयम् अभिनवभारतीव्याख्यानेऽपि शब्दान्तरेण प्रस्तुतो वर्ततेऽधस्तनकारिकाव्याख्यायाम्-

**शारीर्यामथ वीणायां त्रिभ्यः स्थानेभ्य एव तु।**

**उरसः शिरसः कण्ठात्स्वरः काकुः प्रवर्तते।।105।।**इति।

वीणायामध एका तुम्बिका भवति, तदुपरि तन्त्रीपिनद्धः दण्डः क्रमेण आहतनेत्र्या तारं मध्यं मन्द्रं च स्वरं जनयति, तथैव शारीर्यां वीणायामपि चिदाकाशगर्भिता हृत्तुम्बिका, तदुपरि दण्डायमानं कण्ठः शिरश्च. यतस्त्रिविधः स्वरो जन्यते। वीणास्वर इव काकुस्वर इतीह उपमानोपमेयभावो दर्शितः, न तु काकुः केवलस्वरः नादो वेति प्रत्याख्यातपूर्वमिह। इह केषाञ्चन पूर्वाचार्याणां मतम्- 'नेपथ्यवैतालीयादिपाठविषया स्वरकाकुरिह कारिकायामुक्ता' इति। एतन्मतमपाकुर्वन् आचार्योऽभिनवगुप्तः उक्तरीत्या काकोस्त्रिधात्वं व्यवस्थापयति यथा- 1. कदाचिदर्थस्य धर्मपुञ्ज-वाच्यस्य धर्मान्तराधानं काकुरुच्यते, 2. कदाचित्स्वरजनकवृत्यर्पणं करोति यत्र रसस्वरजनककाकु-व्यवहारः, 3. कदाचिच्च नादात्मनि स्वरसूत्रे सुगुम्फितस्य स्वग्रन्थ्यात्मनो वर्णराशेर्दूरश्रवणं किञ्चिच्छ्रवणमश्रवणं वेत्यस्मिन्नर्थे व्याप्रियते, तथापि स्वरकाकुरुच्यते।.......तदेवं व्यतिरिक्ते स्वसेवाव्यापाराद् व्यतिरिक्त-जडचिद्भेदेन तदर्थरसस्वरभेदात् त्रिधैव काकुः-इति। इहाचार्यस्याशयः 'शारीर्यामथ-' इति कारिकाया उपरिभागे सन्दर्भरूपेण प्रस्तावितो वर्तते।

**षडङ्गानि**

षड्भिः उच्चाद्यलंकारैरेव काकोः स्वरूपप्रकाशनं भवति, अतः अलंकारप्रस्तावे तस्या भेदाः सोपपत्तिकं निभालिताः। परमर्थप्रकाशनं कामं तस्याः षडङ्गैरेव जायते, अतोऽवसाने मनाक् चर्चयामस्तदङ्गानि। तानि चाङ्गानि षट्। तथाहि मुनेः सूत्रम्- 'विच्छेदोऽर्पणविसर्गोऽनुबन्धो दीपनं प्रशमनमिति। तत्र विच्छेदो नाम विरामकृतः। अर्पणं नाम लीलायमानमधुरवल्गुना स्वरेण पूरयतेव रङ्गे यत्पठ्यते तदर्पणम्। विसर्गो नाम वाक्यविन्यासः। अनुबन्धो नाम पदान्तरेष्वविच्छेदः, अनुच्छवसनं वा। दीपनं नाम त्रिस्थानैरभिवर्धमानस्वरं चेति। प्रशमनं नाम तारगतानां स्वराणां प्रशाम्यताम् अवैस्वर्येण अवतारणम्' इति।

> एतेषामङ्गानां रसानुकूलो लयानुकूलः स्वरानुसारी च प्रयोगोऽनुशिष्टो मुनिना यथालोकधर्मं प्रायेण। तत्र प्रथममङ्गं विच्छेदो नाम विरामः अर्थसमाप्तौ कार्यवशात्, न तु छन्दोवशात्। कस्मात् ? दृश्यन्ते हि एकद्वित्रिचतुरक्षरा विरामाः। यथा-

**किं? गच्छ, मा विश, सुदुर्जन! वारितोऽसि,**

**कार्यं त्वया न मम सर्वजनोपयुक्तम्।**
**सूचासु चाङ्कुरगते च तथोपचारेष्व-**
**ल्पाक्षराणि हि पदानि भवन्ति काव्ये।।132।।इति।**

इह काव्ये सूचाङ्कुरयोः प्रकाशनं विरामेणैव भवति। बह्वक्षरपदे सूचाङ्कुरयोरुपपत्तिः मध्ये न भवति, यथा-'दरिद्राश्च कियन्तस्ते' इत्यादौ। एवमेव आवेगहर्षयोः प्रकाशनमधस्तने काव्ये विरामेणोपजायते-

**क्वाकार्यम्? शशलक्ष्मणः क्व च कुलम्? भूयोऽपि दृश्येत सा,**
**दोषाणां प्रशमाय नः श्रुतम्, अहो कोपेऽपि कान्तं मुखम्।**
**किं वक्ष्यन्त्यपकल्मषाः कृतधियः, स्वप्नेऽपि सा दुर्लभा,**
**चेतः स्वास्थ्यमुपेहि, कः खलु युवा धन्योऽधरं धास्यति।।**

विक्रमोर्वशीये चतुर्थेऽङ्के उर्वशीं पुरूरवस उक्तिरियम्। इह काव्ये पार्यन्तिकचिन्तया शान्तोपमर्देन शृङ्गारस्य विश्रान्तिः। सा च शत्रुविजयपूर्वकराज्यलाभ इव प्रकर्षनिदानम्।

एवमेव अमरुकशतकस्य काव्यमिदं विरामेणैव स्फुटं भवेत्-

**सा बाला, वयमप्रगल्भनसः, सा स्त्री, वयं कातराः,**
**सा पीनोन्नतिमत्पयोधरयुगं धत्ते, सखेदा वयम्।**
**साक्रान्ता जघनस्थलेन गुरुणा, गन्तुं न शक्ता वयम्,**
**दोषैरन्यजनाश्रयैरपटवो जाताः स्म इत्यद्भुतम्।।**

इह पार्यन्तिकचिन्तया शृङ्गारोपमर्देन अभिनवभारत्यां सूचाङ्कुर-लयस्वरानुगतेन विरामेणोपपादनीयम्-

**तस्यास्तन्मुखमस्ति सौम्यसुभगं, किं पार्वणेनेन्दुना?**
**सौन्दर्यस्य पदं दृशौ च यदि ते, किं नाम नीलोत्पलैः?**
**किं वा कोमलकान्तिभिः किसलयैः, सत्येव तत्राधरे,**
**ही, धातुः पुनरुक्तवस्तुरचनारम्भेष्वपूर्वो ग्रहः। इति।**

इह 'तस्याः''तद्' इत्यादिभिः सूचा तथा 'मुखादिभिः' निवृत्त्यङ्कुरः प्रकाश्यते, तत्र लयस्वरानुकूलो विरामोऽनन्यसहायक इत्यनुभवन्ति सहृदयाः। अत एव मुनिना प्रोक्तम्, विरामे प्रयत्नोऽनुष्ठेयः। कस्मात्? विरामो हि अर्थानुदेशकः-

**विरामेषु प्रयत्नो हि नित्यं कार्यः प्रयोक्तृभिः।**
**कस्माद्?अभिनयो ह्यस्मिन्नार्थापेक्षी यतः स्मृतः।।33।।**

किञ्च अभिनयार्थप्रकाशने विरामस्य अनन्यसाधारणकारणतां विलोक्यैव मुनिः प्रकरणेऽस्मिन् अष्टादशभिः कारिकाभिः तस्य प्रयोगप्रकारं वर्णयामास।अस्तु तावत्।

**उपसंहारः**

रङ्गमञ्चे पात्रभूमिकायां वाचिकाभिनयस्य सर्वं वाचिकं भवति काकुमयम्, अभिनेयत्वात्। यदि ततो वाचिकात् तत्तत्पात्रोचिता ध्वनेर्वल्गुविकारमयी काकुर्निर्गच्छेतर्हि तत्र वाचि अभिनयभूमेरभावात् अभिनेयत्वमपि किमपि न स्यात्। अतस्तत्र सर्वं वाचिकं काकुः। यद्यपि आरोहावरोहकम्पनादि- वर्णधर्मयुता काकुर्गेया न भवति तथापि तदुत्पादने साधितः स्थायिस्वरः सर्वथापेक्षितः, अन्यथा वैस्वर्ये सति सा नोदियात्। काकुस्वरम् अकस्मात् तारान्मन्द्रं वा तारं न कदापि नयेत्। तत्र उच्चदीप्ताद्यलङ्कारस्वरेण साकाङ्क्षा अर्थकाकुः, द्रुतविलम्बितादिलयेन रसकाकुः स्वरकाकुश्च सभ्येषु प्रकाशते कामम्। अर्थरसस्वरस्वरूपायास्त्रिविधायाः अपि काकोः स्वरूपप्रकाशनं यथा षडलंकाराधीनम्, तथैव तस्या अर्थाभिव्यञ्जनं विरामादिषडङ्गायत्तम्। अत एव मुनिः नाट्यपाठ्यगुणेषु षट् तत्त्वानीति व्याजहार। अभिनयो हि प्रयोगशास्त्रम्। अतः प्रयोगाभ्यासदशायां प्रयोगशालायामेव तच्छास्त्रं स्वात्मानं विवृणुते। इह तु दिङ्निर्देशः शिवाय नो भूयात्।

****

महाशिवरात्रिः 14.02.2018

सेवानिवृत्तः संस्थापकप्राचार्यः
राष्ट्रियसंस्कृतसंस्थान- भोपालपरिसरस्य
2/239, विरामखण्ड, गोमतीनगर,
लखनऊ- 226010 दूर.09454318015

# काव्यशास्त्रीयमलङ्कारस्वरूपम्

प्रो.रामकुमारशर्मा

**शब्दार्थौ सहितौ** काव्यमिति वदता भामहेन सहितशब्दप्रयोगद्वारा विशिष्टौ शब्दार्थौ काव्यमिति सूचितम्। भोजेन शृङ्गारप्रकाशे सम्बन्धरूपं साहित्यं द्वादशधा विचारितम्। तत्र दोषाभाव-गुणालंकार-रसयोगरूपाणि चत्वारि साहित्यानि शब्दार्थयोः काव्यपदप्रयोगस्य मुख्यनिमित्तत्वेन प्रयुक्तानि। अलंकारयोग एव शब्दार्थयोः काव्यव्यवहारस्य मूलमिति भामहादिसम्मतस्य रसादीनप्यलंकारकुक्षौ निक्षिपतोऽलंकारप्रस्थानस्य हृदयम्। अलंकार एव शब्दार्थयोर्वैशिष्ट्यस्याधायकः काव्यत्वजनक इति तात्पर्यम्। **अल भूषणपर्याप्तिवारणेषु-** इति भौवादिकादलतेर्व्युत्पादितोऽलमित्यव्ययशब्दो भूषापर्याप्तिवारणार्थकः। तस्मिन्नुपपदे करोतेः **कर्मण्यण्** इति सूत्रेण कर्तर्यणि, भावे करणे वा घञि वा व्युत्पादयितुं शक्यस्याऽलङ्कारशब्दस्य शोभायाः, पूर्णताया दोषादेर्वारणस्य कर्ता, करणं साधनं वा व्युत्पत्तिलभ्या अर्थाः। काव्यशास्त्रेऽयमलङ्कारशब्दः सौन्दर्ये, सौन्दर्यस्य साधने, पूर्णतायाम्, अलङ्करणीये प्रतीयमाने ध्वनिपदवाच्य उपमादौ च प्रयुक्तः। तत्र वामनः सौन्दर्ये तत्साधने च, आधुनिका रेवाप्रसादद्विवेदिप्रभृतयोऽलंभावोऽलङ्कार इति ब्रुवाणा पूर्णतायाम्, ध्वनिवादिनश्च प्रधानव्यङ्ग्येऽलंकरणीय उपमादौ ब्राह्मणश्रमणन्यायेन प्रयुक्तवन्तः। सूक्ष्मतया विचारे कृते सति काव्यशास्त्रीयमलङ्कारस्वरूपं मुख्यतया त्रिधा प्रतिफलति- काव्यशोभाकरो धर्मोऽलङ्कारः, काव्यशोभातिशयकरो धर्मोऽलङ्कारः, परम्परया कदाचिद् रसोपकारकः काव्यधर्मोऽलंकारः। एतत् त्रिविधं स्वरूपमिह क्रमेण प्रदर्श्यते-

**काव्यशोभाकरो धर्मोऽलङ्कारः**

काव्यशोभाकरत्वमलंकारत्वमिति **काव्यशोभाकरान् धर्मानलंकारान् प्रचक्षते** इति दण्डिनोऽग्निपुराणस्य च वचनेन सिद्धम्। सालंकारयोरेव शब्दार्थयोः काव्यशब्दस्य मुख्यार्थत्वेनैतादृशे स्थले काव्यशब्दो लक्षणया शब्दार्थमात्रस्य बोधकः। तेनेदं फलति

यद् येन धर्मेण शब्दार्थयोः सौन्दर्यं जन्यते जातेन येन धर्मेण शब्दार्थयोः काव्यपदस्य व्यवहारश्च सोऽलंकारः। शोभापदेन सौन्दर्यं विवक्षितम्। तदेव वस्तुतः शब्दार्थयोः काव्यपदप्रवृत्तेर्निमित्तम्। तस्य सौन्दर्यस्य सिद्धिर्येन धर्मेण स एवालंकारः। अत्र स धर्मो प्रसादादिगुणाऽनुप्रासोपमादि-रस-रीतिच्छन्दःप्रभृतिरूपः सर्वः। गुणालंकारयोर्विभागो वस्तुतोऽसंभवीति दण्डिनोऽभिप्राय इति **दण्डिनाऽपि...... इति ब्रुवता गुणमध्य एव तत्र प्रसादादीन् अभिदधता च गुणालंकारविभागोऽप्यसंभवीति सूचितं भवति**इत्यभिनवभारत्या वचनेन स्पष्टम्। कुन्तकेन वक्रोक्तिजीवितस्यारम्भेऽलंकारशब्दस्य प्रयोगः सौन्दर्यस्य सर्वेषु साधनेषु कृतः।एवमिहालंकारशब्दस्य व्यापकः प्रयोगः।किन्तु तन्मते भामहाङ्गीकृताऽतिशयोक्तिरूपा वक्रोक्तिः काव्यजीवितम्। सा च विचित्राभिधा प्रसिद्धाऽभिधानव्यतिरेकिणी, चमत्कारिणी सर्वशब्दार्थाऽनुप्रासोपमाद्यलंकारबीजभूता। सैव वक्रोक्तिः स्वमूलकैरनुप्रासोपमादिभिः सौन्दर्यस्य सम्पादनेन शब्दार्थयोः काव्यपदप्रयोगस्य निमित्तम्। अतिशयोक्त्यपरनामधेयया वक्रोक्त्या शब्दार्थयो रसाभिव्यञ्जकविभावतायाः सम्पादनम्-

**सैषा सर्वत्र वक्रोक्तिरनयार्थो विभाव्यते।**
**यत्नोऽस्यां कविना कार्यः कोऽलंकारोऽनया विना।।**

इत्यादि वदता भामहेन तदभिप्रायं ध्वन्यालोकलोचने प्रतिपादयताऽभिनवगुप्तेन च स्फुटीकृतम्। एवमिह वक्रोक्तिमूलाः शब्दार्थसौन्दर्यसाधनभूता धर्मा अलंकारपदेन व्यपदेश्याः।

**काव्यशोभातिशयकरो धर्मोऽलङ्कारः**

गुणजनितायाः शब्दार्थशोभाया अतिशयस्य साधको धर्मोऽलंकार इति वामनस्याऽभिमतिः। एवं गुणो नित्योऽलंकारश्चानित्यो धर्म इति वामन एवाह, किन्तु काव्यशब्दस्य मुख्यं प्रयोगं गुणालंकारसंस्कृतयोरेव शब्दार्थयोरङ्गीचकार। काव्यरचनामुपदिशता भरतेन नाट्यशास्त्रस्य षोडशेऽध्याये लक्षणानि, अलंकाराः, गुणाः, दोषाश्च निरूपिताः। तत्र षट्त्रिंशद्भेदो लक्षणरूपो गुणरूपश्च धर्मोऽलंकारपदवाच्याद् धर्मात् पृथक् कृतः। विभावादिवैचित्र्यसम्पादकः कवि-शब्दार्थव्यापारो लक्षणपदस्य मुख्योऽर्थः, गौणस्तुतद्व्यापारसम्पाद्यः स्तनाद्यर्थगतः पीवरत्वादिः, शब्दस्य रसाभिव्यक्तिक्षमार्थप्रतिपादकत्वं शब्दगुणोऽर्थस्य च

रसाभिव्यक्तिहेतुत्वमर्थगुणः, प्राक्तनस्य पदस्य वर्णस्य वा सौन्दर्यस्य कारणमावर्तमानं पदं वर्णो वा शब्दालंकारो वदनस्य चन्द्र इव वस्त्वन्तरं चार्थालंकारः। लक्षणादीनां भेद एवमपि ज्ञातुं शक्यते। यथा यदा राजपदार्थस्य काल्पनिको विभागः क्रियते तदा मुकुटादिरलंकारः, शौर्यादिर्गुणः, व्यूढोरस्कत्वादिर्लक्षणं भवति तथा काव्य-पदार्थस्यानुप्रासोपमादिरलंकारः, प्रसादादिर्गुणः, अर्थगतसिद्धसाध्यगुणक्रियादिरूपो धर्मो लक्षणं च भवति। यथालंकरणीयो गुणवान् लक्षणवांश्च राजपदार्थस्तथा शब्दार्थरूपः काव्यपदार्थः। इदं नाट्यशास्त्रस्य षोडशाध्यायस्याभिनवभारत्यां स्पष्टम्। काव्यं गुणालंकारहीनमपि भवितुमर्हति, न तु लक्षणहीनमपि, गुणालंकारापेक्षयाऽलंकारमूलतया च लक्षणस्य प्राधान्यात् पूर्वमुद्देशो विहितः स्वरूपं निरूपितं च नाट्यशास्त्रे- **क्वचिदलंकारविहीनोऽपि स्वयं सुन्दरस्वभावोऽर्थः, कुत्रचिच्छब्दः,......अत एव 'काव्यबन्धास्तु कर्तव्याः षट्त्रिंशल्लक्षणान्विताः' इति लक्षणान्येव हि प्रधानं तत्प्रसङ्गेन गुणालंकारा इति तात्पर्यम्**।एवमलंकारेण सह गुणानामप्यनित्यधर्मत्वं सूच्यते नाट्यशास्त्रे, लक्षणस्य सौन्दर्यसाधनत्वात्। किन्तु वामनेन गुणः सौन्दर्यस्य साधकत्वेन नित्योऽलंकारस्तु गुणजन्यसौन्दर्यातिशयहेतुत्वेनाऽनित्यो धर्म उक्तः।एष एव पक्षः पश्चादनुसृतः। गुणानां नित्यधर्मत्वं भरतादेरपि सम्मत्या सिद्धान्तरूपेणाऽभिनवभारत्यां प्रतिपादितं च।

नाट्यशास्त्रे चत्वार एवालंकाराः प्रतिपादिताः-

**उपमा रूपकं चैव दीपकं यमकं तथा।**
**अलंकारास्तु विज्ञेयाश्चत्वारो नाटकाश्रयाः।।**

सादृश्यस्य वाच्यतायामुपमा, सत्युपमानोपमेयप्रयोगे सादृश्यस्य प्रतीयमानतायां रूपकम्, उभयोरर्थयोरेकधर्मस्य योगेन सादृश्यस्य प्रतीयमानतायां दीपकं च। यमकं सर्वं शब्दालंकारप्रपञ्चं गर्भीकरोति। अत एव यादृशे पद्ये पश्चात्तनैरनुप्रासो व्यपदिष्टस्तत्रापि भरतेन यमकपदेन व्यपदेशः। यथा-

**स पुष्कराक्षः क्षतजोक्षिताक्षः क्षरत्क्षतेभ्यः क्षतजं दुरीक्षः।**
**क्षतैर्गवाक्षैरिव संवृताक्षःसाक्षात् सहस्राक्ष इवावभाति।।**

अत्र चत्वारोऽलंकारा अलंकारान्तरस्य बीजमुपलक्षणं च। तत्राप्युपमा सर्वालंकारबीजम्। अलंकाराणां लक्षणमूलकत्वम्। एतद्विषयाऽभिनवभारत्येवं द्रष्टुं

शक्यते- **कविव्यापारबलादर्थजातं लौकिकस्वभावाद् भिद्यमानं तदेव लक्षणमित्युक्तम्। यत्र शरीरकल्पस्यालंकारा अधुना वक्तव्याः। .... काव्ये तावल्लक्षणं शरीरम्, तस्योपमादयस्त्रयोऽर्थभागे, यथा हि पृथग्भूतेन हारेण रमणी विभूष्यते तथोपमानेन शशिना तत्सादृश्येन वा कविबुद्धौ चञ्चलतया परिवर्तमानत्वात् पृथक्सिद्धेनेव प्रकृतं वर्णनीयं वनितावदनारविन्दादि सुन्दरीक्रियत इति तदेवालंकारः। ......उपाध्यायमतं तु- लक्षणबलादलंकाराणां वैचित्र्यमागच्छति। तथा हि- गुणानुवादनाम्ना लक्षणेन योगात् प्रशंसोपमा, अतिशयनाम्नाऽतिशयोक्तिः, मनोरथाख्येनाप्रस्तुतप्रशंसा मिथ्याध्यवसायेनापह्नुतिः, सिद्ध्या तुल्ययोगितेति, एवमन्यदप्युत्प्रेक्ष्यम्। लक्षणानां च वैचित्र्यादनन्तो विचित्रभावः, यथा प्रतिषेधमनोरथयोः सम्मेलनादाक्षेपः। उपमा प्रपञ्चश्च सर्वोऽलंकार इति विद्वद्भिः प्रतिपन्नमेव ।**

यद्यपि काव्यालंकारो लौकिकालंकारेणोमीयते तथापि काव्यस्य क्वचनालंकारहीनत्वेऽपि काव्याद् नालंकारस्य मुकुटादेरिव शरीरात् पृथक् सत्तेति नालंकारस्य काव्यादत्यन्तभिन्नता। एवमिह मते लक्षणगुणादिजन्यसौन्दर्यातिशयस्य हेतुरुपमादिरनित्यः काव्यधर्मोऽलंकार इति फलितम्।

**परम्परया कदाचिद् रसोपकारकः काव्यधर्मोऽलंकारः**

अलंकारस्येदं स्वरूपं ध्वनिवादिभिरङ्गीकृतम्। यो धर्मः शब्दार्थयोः कदाचन तिष्ठति, कदाचनैव शब्दार्थद्वारा सन्तं रसमुपकरोति रसाभावस्थलेऽपि तिष्ठति च सोऽनुप्रासोपमादिरलंकारः। उक्तम्-

**उपकुर्वन्ति तं सन्तं येऽङ्गद्वारेण जातुचित्।**
**हारादिवदलंकारास्तेऽनुप्रासोपमादयः।।**

यथा-

**अपसारय घनसारं कुरु हारं दूर एव किं कमलैः।**
**अलमलमालि मृणालैरिति वदति दिवानिशं बाला।।**

अत्र रेफाद्यनुप्रासः शब्दद्वारा विप्रलम्भशृङ्गाररसमुपकरोति।

**मनोरागस्तीव्रं विषमिव विसर्पत्यविरतं**
**प्रमाथी निर्धूमं ज्वलति विधुतः पावक इव।**
**हिनस्ति प्रत्यङ्गं ज्वर इव गरीयानित इतो**
**न मां त्रातुं तातः प्रभवति न चाम्बा न भवती।।**

अत्र विषेण पावकेन ज्वरेण चोपमया मनोरागे प्राणहरत्वादिधर्मस्य सिद्ध्या तदर्थद्वारा शृङ्गारस्योपकारः। **चित्ते विहट्टदि दिण टुट्टदि**इत्यादौ टकारानुप्रासस्य शृङ्गारप्रतिकूलत्वेन तेन शब्दद्वारा विप्रलम्भस्य नोपकारः।

**मित्रे क्वापि गते सरोरुहवने बद्धानने ताम्यति**
**क्रन्दत्सु भ्रमरेषु वीक्ष्य दयितासन्नं पुरः सारसम्।**
**चक्राह्वेन वियोगिना बिसलता नास्वादिता नोज्झिता**
**कण्ठे केवलमर्गलेव निहिता जीवस्य निर्गच्छतः।।**

अत्र जीवितनिरोधाय कण्ठे स्थापिताया बिसलताया अर्गलयोपमाऽनुचिततयाऽर्थद्वारा विप्रलम्भस्य नोपकारिका, प्रत्युत विप्रलम्भे प्राणत्यागाध्यवसायस्यैवोचितत्वेन तस्य रसस्यापकर्षिका। यत्र तु न रसस्तत्रालंकारस्तूक्तिवैचित्र्यपर्यवसायी।।एमिह रसव्यभिचरितस्थितिकत्वे शब्दार्थवृत्तित्वे सति च जातुजिद्रसोपकारकत्वम् अलंकारत्वमिति फलति।

एवमलंकारस्य त्रिविधं मुख्यं स्वरूपम्। वक्रोक्तिजीवितानुसारेण व्यक्तिविवेकेऽलंकारो विचित्राभिधाव्यापाररूपत्वेन स्वीकृतः, न तु शब्दार्थधर्मरूपः। तत्र व्यापारस्य विषयशब्दार्थद्वारैव स्वरूपोपलम्भेन शब्दार्थधर्मत्वमेवालंकारस्य समुचितमिति व्यक्तिविविवेकव्याख्यानादौ रुय्यकेण स्वीकृतम्।

समेषामलंकाराणां मूलमुपमेति भरतस्य हृदयम्। वक्रोक्त्यपराभिधानाऽतिशयोक्तिरेव मूलमिति भामहादिमतम्। वास्तवौपम्यातिशयश्लेषाश्चत्वारि मूलानीति रुद्रटः। सादृश्याध्यवसाय-विरोध-शृङ्खला-तर्कन्याय-वाक्यन्याय-लोकन्याय-गूढार्थप्रतीत्याख्यानि सप्त मूलानीति रुय्यकः। सादृश्याध्यवसाय-विरोध-वाक्यन्याय-लोकव्यवहार-शृङ्खलावैचित्र्यापह्नव-विशेषण-वैचित्र्याणीति नव मूलानीति प्रतापरुद्रयशोभूषणे विद्यानाथः। उपमैव मूलमित्याह भरतस्यैव मतमनुसरश्चित्रमीमांसाकारोऽप्पयदीक्षितः। इदं सर्वं काव्यात्ममीमांसायां स्फुटम्।**उपमा कविवंशस्य मातै**वेति मतिर्ममेति काव्यमीमांसायां राजशेखरः। उपमामूलत्वं रूपकादिषु स्फुटम्। अनुप्रासादौ शब्दसाम्यं प्रसिद्धमेव। विरोधादिष्वपि श्लेषवशेनैकशब्दबोध्यत्वरूपेण साधारणधर्मेणाऽभेदघटितं साधर्म्यमादायैव विरोधोत्थानमित्याद्यन्वेषणीयम्। अलंकारसंख्याविषये महान् कलकलः। तत्र भोजस्य वैशिष्ट्यम्। शृङ्गारप्रकाशे चतुर्विंशतिः शब्दालंकाराः, तावन्त एवार्थालंकाराः, तावन्त एवोभयालंकाराश्च। तत्र वस्त्रमाल्यादिवद् बाह्याः शब्दमेवालंकुर्वाणाः शब्दालंकारा यथा-संस्कृतप्राकृतादिरूपा जातिः,

गद्यपद्यमिश्रादिरूपा गतिः, विदर्भादिवाक्यरचनमार्गलक्षणा रीतिः, चेतोविकासविक्षेपविस्तरसंकोचकारिणी वृत्तिः, यथावच्छब्दार्थनिवेशरूपा रचना, पदार्थानां परस्परोपश्लेषरूपा घटना, साभिप्रायवचननिवेशरूपा मुद्रा, अन्योक्त्यनुकरणस्वरूपा छाया, परस्परमयुज्यमानस्य शब्दस्यार्थस्य वा परस्परयोजनरूपा युक्तिः, विधिनिषेधादेरभिधारूपोक्तिः,उक्तेरेव प्रकारान्तराख्यानलक्षणा भणितिः, काक्वादिना वाक्योच्चारणरूपा पठितिः, श्रुतिसुखजनकत्वरूपं श्रव्यत्वम्, प्रेक्षानिमित्तं वाचिकाद्यभिनयरहितम् आङ्गिकैकनिर्वर्त्यप्रस्थानडोम्बलिकादिवाक्यत्वं प्रेक्ष्यत्वम्, दशरूपकविषयत्वरूपम् अभिनेयत्वम्, विधनिषेधहेतुत्वम् अध्येयत्वम्, उक्तिप्रत्युक्तिरूपं वाकोवाक्यम्, विदग्धगोष्ठीविनोदहेतुपर्यनुयोगनिर्भेदः प्रश्नोत्तरम्, प्रश्न एवोत्तरः प्रहेलिका, श्लोकादेरक्षरव्यत्यासेन कथनम् अक्षरमुष्टिः, गुप्तक्रियापदादिप्रयोगो गूढम्, स्वरस्थानवर्णगतिबन्धाकारादिनियमरूपं चित्रम्, द्वयोस्तन्त्रेणाभिधानरूपः श्लेषः, यमकम्, अनुप्रासश्च। छन्दसः शब्दालंकारत्वं महिमभट्टेनापि प्रतिपादितम्।

अर्थमेव व्युत्पत्त्यादिनाऽलंकुर्वाणा दन्तपरिकर्मादिस्थानीया आन्तरा अर्थालंकारा यथा-स्वभावोक्तिरूपा जातिः, सूक्ष्मः, सारः, समाहितम्, भावः, विभावना, हेतुः, अहेतुः, सम्भवः, विरोधः, दृष्टान्तः, व्यतिरेकः, अन्योन्यम्, परिवृत्तिः, मीलितम्, वितर्कः, स्मरणम्, भ्रान्तिः, उपमानम्, अनुमानम्, अर्थापत्तिः, अभावः, आगमः, प्रत्यक्षं च। शब्दविशेषद्वारकोऽर्थविशेषो येषु प्रतीयते ते स्नानधूपविलेपनादिस्थानीया बाह्याभ्यन्तरव्यपदेशभाजोऽर्थमलंकुर्वाणा उभयालंकारा यथा- उपमा,रूपकम्, साम्यम्, संशयः, समाधिः, समासोक्तिः, अतिशयोक्तिः, समुच्चयः, तुल्ययोगिता, लेशः, अपह्नुतिः, अप्रस्तुतप्रशंसा, उत्प्रेक्षा, अर्थान्तरन्यासः, दीपकम्, परिकरः, क्रमः, पर्यायः, अतिशयः, आक्षेपः, विशेषः, श्लेषः, भाविकः, संसृष्टिश्च। अत्रोपमादिभिरिवादिशब्दविशेषद्वाराऽर्थस्यालंकरणमिति प्रतीयते। एषां शब्दार्थोभयालंकाराणां द्विसप्ततेःसभेदोदाहरणं निरूपणं विस्तरेण शृङ्गारप्रकाशस्य दशमे प्रकाशे विहितम्।

एवं काव्यशास्त्रीयालंकारस्वरूपं सामान्येनाऽत्र सूचितम्।

साहित्यविभागाध्यक्षः

रा.सं.सं. जयपुरपरिसरः, जयपुरम्, राजस्थानम्

# संस्कृतकाव्यशास्त्रेऽलङ्कारतत्त्वम्

डॉ.सनन्दनकुमारत्रिपाठी

आवैदिककालादेवाऽलङ्कारप्रस्थानं वेदेषु बीजत्वेनोप्तं दरीदृश्यते। संस्कृतकाव्यशास्त्रे रसप्रस्थानानन्तरमलङ्कारप्रस्थानं ततश्च रीतिध्वनिवक्रोक्त्यौचित्यानि षट् प्रस्थानानि कृतपदानि प्रसिद्ध्यन्ति। समेषां प्रस्थानानां भिन्नताया मूलं खलु प्राधान्यम्। प्राधान्याधारेण प्रस्थानानि कल्पितानि। तत्रान्यतममलङ्कारप्रस्थानं प्राचीनतमम्। सर्वप्रस्थानेष्वलङ्कारः केनापि रूपेण प्रवर्तत एवेत्यस्य व्यापकत्वम्। अलङ्कार एव प्रधानं काव्यस्यात्मेत्यलङ्कारवादिनां मतम्।

ऋग्वेदे नैकमन्त्रेषु अरङ्कृतिरिति पदम्, अरम् (अलम्) इत्युपपदसहितः कृधातुर्वा अलङ्करणार्थे प्रयुक्ते। यास्केन निरुक्त उपमास्वरूपं विचारितमुपमायाः पञ्च भेदाश्च प्रतिपादिताः। इत्थं ऋग्वेद एवालङ्कारप्रस्थानबीजम्।

“अलम्”पूर्वकात् ‘कृ’धातोः “अलङ्क्रियतेऽनेन” “अलङ्करोति इति” “अलङ्करणम्” वेति व्युत्पत्त्या घञ्प्रत्यये निष्पन्नोऽलङ्कारशब्दोऽर्थद्वये प्रवर्तते सौन्दर्यार्थे सौन्दर्यसाधनार्थे च ।

तेनालङ्कारपदस्यार्थद्वयम्- सौन्दर्यं सौन्दर्यसाधनञ्चेति। वामनेन सौन्दर्यमलङ्कारं मत्वा तेनैव काव्यस्य ग्राह्यता प्रत्यपादि-

**काव्यं ग्राह्यमलङ्कारात्। सौन्दर्यमलङ्कारः।**[1]

सौन्दर्यसाधनान्युपमादयोऽलङ्काराश्चेद् यथा कटककुण्डलादीनि शरीरमलङ्कुर्वन्ति तथानुप्रासोपमादयोऽलङ्कारा अपि शब्दार्थशरीरं काव्यम्। अलङ्कारविवेचनं नाट्यशास्त्रे अग्निपुराणे च वर्तते। अलङ्काराणां सत्ता केनापि रूपेण सर्वेषु प्रस्थानेषु वर्तते। काव्यस्य प्रधानं तत्त्वमलङ्कार इति भामहोद्भटदण्डिप्रभृतयः।

---

[1] काव्यालङ्कारसूत्रम्-1-1-1-2)

अलङ्कारसम्प्रदायस्य प्रवर्तकेष्वग्निपुराणकारः प्रथमः। ततश्च भरतमुनिनापि बीजरूपेण सूत्रितोऽलङ्कारसम्प्रदायो भामहेन **काव्यालङ्कारे** प्रतिष्ठापितः। तेन अतिशयोक्तिविवेचने सैव वक्रोक्तिः काव्यसर्वस्वञ्चामन्यत-

**'सैषा सर्वत्र वक्रोक्तिरनयार्थो विभाव्यते।**
**यत्नोऽस्यां कविना कार्यः कोऽलङ्कारोऽनया विना।।'[1]**

भामहेन रसा रसवदलङ्कारेष्वन्तर्भाविताः। तन्मते रसोऽप्यलङ्कार एव। अग्निपुराणकारेण काव्यशोभाकरो धर्मोऽलङ्कारो मतः-

अलङ्काररहिता सरस्वती विधवेव मता। यथा-

अर्थालङ्काररहिता विधवेव सरस्वती। [2]

काव्यशोभाकरान् धार्मानलङ्कारान् प्रचक्षते। [3]

दण्डिनापि काव्यादर्शेऽग्निपुराणकारोऽनुसृतः। काव्ये सौन्दर्याधायका अनुप्रासोपमादयोऽलङ्क्रियतेऽनेनेति व्युत्पत्त्या अलङ्कारा उच्यन्ते, किन्तु ध्वनिकारेणानन्दवर्धनेनालङ्काराङ्गित्वं खण्डयित्वा ध्वन्यात्मवादः प्रतिष्ठापितः। तथापि तेनालङ्कारं ध्वनिं मत्वा तन्महत्त्वं द्योतितमेव। अलङ्कारप्रयोगविषये युक्तिं प्रदर्शयन् ध्वन्यालोककारो वक्ति यत् ध्वनौ यस्यालङ्कारस्य बन्धो रसध्वनिदृष्ट्या आक्षिप्ततया अपृथग्यत्ननिर्वर्त्यो भवति। स एवालङ्कारः स्वीकार्यः। यथा-

**रसाक्षिप्ततया यस्य बन्धः शक्यक्रियो भवेत्।**
**अपृथग्यत्ननिर्वर्त्यः सोऽलङ्कारो ध्वनौ मतः।।[4]**

किन्तु शब्दशक्तया सामर्थ्याक्षिप्तं सदलङ्कारान्तरं प्रतीयते यत्र स सर्वो ध्वनेर्विषयः। यथा-

**आक्षिप्त एवालङ्कारः शब्दशक्त्या प्रकाशते।**
**यस्मिन्ननुक्तः शब्देन शब्दशक्त्युद्भवो हि सः।।[5]**

यत्र तु सामर्थ्याक्षिप्तं सदलङ्कारान्तरं शब्दशक्त्या प्रकाशते। स सर्व एव ध्वनेर्विषयः।[6]

---

[1] काव्यालङ्कारः 2.85

[2] अग्निपुराणम् 343-12

[3] तत्रैव

[4] ध्वन्यालोकः 2/16

[5] ध्वन्यालोकः 2/21

[6] ध्वन्यालोकः 2/21, वृत्तिः।

आनन्दवर्धनेन काव्ये अलङ्काराणां नियोजनं रसादीनाम् अङ्गरूपेण प्रत्यपादि। यथा-

**'विवक्षा तत्परत्वेन नाङ्गित्वेन कदाचन।'** [7]

आनन्दवर्धनमम्मटादयः अलङ्काराणां काव्यशोभाधायकत्वं मत्वापि तेषां काव्ये बहिरंगत्त्वमेव साधयन्ति। काव्यशरीरभूतयोः शब्दार्थयोः शोभासंवर्धकानाम् अलङ्कारणां प्रयोगः रसोपकारकत्वेन कार्यः। यथा कामिनीशरीरं कटककुण्डलादयः अलङ्काराः अलङ्कुर्वन्ति तथानुप्रासोपमादयोऽलङ्काराः शब्दार्थौ अलङ्कुर्वन्ति। यथा-

**तमर्थमवलम्बन्ते येऽङ्गिनं ते गुणाः स्मृताः।**
**अङ्गाश्रितास्त्वलङ्कारा मन्तव्याः कटकादिवत्।।** [8]

अलङ्काराणां विनिवेशनं रसदृष्ट्या एव करणीयम्, नतु तदर्थं पृथग् यत्नः कार्यः। यथोक्तं ध्वनिकृता-

**रसाक्षिप्ततया यस्य बन्धः शक्यक्रियो भवेत्।**
**अपृथग्यत्ननिर्वर्त्यः सोऽलङ्कारो ध्वनौ मतः।।** [9]

एतद्विषये काव्यप्रकाशकारो मम्मट आह-

**उपकुर्वन्ति तं सन्तं येऽङ्गद्वारेण जातुचित्।**
**हारादिवदलङ्कारास्तेऽनुप्रासोपमादयः।।**[10]

काव्ये सन्तं रसं शब्दार्थद्वारेण ये जातुचिदुपकुर्वन्ति तेऽनुप्रासोपमादयो देहहाराद्यलङ्कारवदलङ्काराः। एवम् काव्यप्रकाशकृता अलङ्काराः शब्दार्थयोर्धर्माः तथा शब्दार्थद्वारेण व्यभिचरितरूपेण रसोपकारका मताः । इत्थं मम्मटमतेऽलङ्काराः काव्यस्याङ्गभूतमुपकारकं तत्त्वम्।

तत्र भामहेन व्यवस्थापितस्यालङ्कारस्य परवर्तिभिराचार्यैरुद्भट-दण्डि-रूद्रट-प्रतिहारेन्दुराज-जयदेवादिभिरलङ्कारस्याधारः सुदृढीकृतः। जयदेवेन तु मम्मटकाव्यलक्षणे प्रयुक्तम् **'अनलङ्कृती पुनः क्वापि'** इति विशेषणमधिक्षिप्तम्-

**अङ्गीकरोति यः काव्यं शब्दार्थावनलङ्कृती।**
**असौ न मन्यते कस्मादनुष्णमनलङ्कृती॥**[11]

---

[7] ध्वन्यालोकः **2/19**

[8] ध्वन्यालोकः **2/7**

[9] ध्वन्यालोकः **2/17**

[10] काव्यप्रकाशः 8/67

इत्थमलङ्कारवादिन आचार्याः काव्येऽलङ्कारमेवप्रधानमङ्गीकुर्वन्ति। एवमेवोद्भटरुद्रट्टाभ्यामपि काव्येऽलङ्कारस्य प्राधान्यं स्वीचक्रे। कुन्तकेनालङ्कारस्य महत्त्वममानि। काव्यं परिभाषमाणेन तेन सालङ्कारस्य काव्यत्वमुररीकृतम्-

**"तदुपायतया तत्त्वं सालङ्कारस्यकाव्यता।"** [12]

कुन्तकेन वैदग्ध्यभङ्गीभणितिरूपा वक्रोक्तिरेव काव्यजीवितं स्वीक्रियते-

**'वक्रोक्तिरेव वैदग्ध्यभङ्गीभणितिरुच्यते।'** [13]

भोजराजस्तु काव्यशोभाकरत्वमलकारलक्षणं मत्वा वक्रोक्तिमपि अलङ्कारमेव मेने। भोजमते अलङ्काराणां वर्गत्रयं स्वीकृतम्- वक्रोक्तिः, स्वभावोक्तिः, रसोक्तिश्चेति। उपमादिप्राधान्ये वक्रोक्तिः, गुणप्राधान्ये सति स्वभावोक्तिः, विभावादिसंयोगे रसोक्तिश्च। यथा-

"त्रिविधः खल्वलङ्कारवर्गः- वक्रोक्तिः, स्वभावोक्तिः, रसोक्तिरिति। तत्रेपमाद्यलङ्कारप्राधान्ये वक्रोक्तिः, गुणप्राधान्ये स्वभावोक्तिः **विभावानुभाव-व्यभिचारिसंयोगात्तु रसोक्तिरिति"।।**[14]

अग्निपुराणकारमत आक्षेपालङ्कार एव ध्वनिः-

**स आक्षेपो ध्वनिः स्याच्च ध्वनिना व्यज्यते यतः।** [15]

वक्रोक्तिः, रीतिः, औचित्यञ्चालङ्कार एव। वक्रोक्तिरनेकैरलङ्कारत्वेन मता । उक्तिवैचित्र्यमलङ्कारः। वक्रोक्तिरलङ्कारसिद्धान्तस्य शाखा अङ्गं वा। भोजेन रीतिः शब्दालङ्कारत्वेनाङ्गीकृता। रीतिः काव्यकलेवरस्य मनोरमरूपदात्री शय्या। तत्प्रभावेण कवयः स्वकाव्यं चमत्कुर्वन्ति। अतः रीतिरपि काव्यालङ्कारः, चमत्कारजनकत्वात्। औचित्यं दोषाभावमात्रम्। औचित्यमपि गुणः।

एवं वक्रोक्तिः, रीतिः, रस इत्यादयः अलङ्कारमेव समाविशन्ति अतः अलङ्कारप्रस्थानस्य अस्ति किमपि विशिष्टं व्यापकञ्च महत्त्वम्। अतएव अलङ्कारस्य प्राधान्येन साहित्यशास्त्रस्य अलङ्कारशास्त्रमित्यभिधानं सङ्गच्छते।

---

[11] **चन्द्रालोकः**

[12] **वक्रोक्तिजीवितम्**

[13] **वक्रोक्तिजीवितम्**

[14] **शृङ्गारप्रकाशः, पृ. 11**

[15] अग्निपुराणम्

वस्तुतस्तु ध्वनिसम्प्रदायस्योद्भवानन्तरमलङ्कारशब्दार्थः सौन्दर्यसाधने अनुप्रासोपमादौ प्रसिद्धिं प्राप्तः। एवमानन्दवर्धनमम्मटादयः अलङ्काराणां काव्यशोभाधायकत्वं मत्वापि तेषां काव्ये बहिरङ्गत्त्वमेव साधयन्ति। अलङ्काराणां विनिवेशनं रसदृष्ट्या एव करणीयम्, ननु तदर्थं पृथग् यत्नः कार्यः। मम्मट-विश्वनाथ-जगन्नाथादिभिः आचार्यैः अनयैव दृष्ट्या अलङ्काराणां लक्षणानि कृतानि।

भामहः अलङ्कारं काव्यात्मत्वेनास्थापयत्। असौ भरतस्य रसतत्त्वमपि रसवदालङ्कारममन्यत। भामहेन शब्दर्थवक्रतायुक्ता उक्तिरलङ्कृतिर्मता। अथ च वक्रोक्तेरभावेऽलङ्काराभावः प्रतिपादितः। तन्मते वक्रोक्तिं विनालङ्कारो न भवति। इयं वक्रोक्तिः अतिशयोक्तिश्च अभिन्ने स्तः। अतिशयोक्तिर्लोकविलक्षणतया अत्यन्तं रमणीया। अस्या एव अलङ्काराः निष्पद्यन्ते। यथोक्तम्-

**वक्राभिधेयशब्दोक्तिरिष्टा वाचामलङ्कृतिः।।**[16]
**वाचां वक्रार्थशब्दोक्तिरलङ्काराय कल्पते।।**[17]
**सैषा सर्वत्र वक्रोक्तिरनयार्थो विभाव्यते।**
**यत्नोऽस्यां कविना कार्यः कोऽलङ्कारोऽनया विना।** [18]

आचार्यदण्डिना काव्यशोभकरः धर्मः अलङ्कारः प्रतिपादितः। तेन काव्ये शोभासम्पादकतया रसादीनां ग्रहणं रसवदाद्यलङ्कारेषु विहितः।

मम्मट-विश्वनाथ-जगन्नाथादिभिः आचार्यैः अनयैव दृष्ट्या अलङ्काराणां लक्षणानि कृतानि।

साहित्यदर्पणकारो विश्वनाथः अलङ्कारम् एवं पर्यभाषत-

**'शब्दार्थयोरस्थिरा धर्माः शोभातिशायिनः।**

**रसादीनुपकुर्वन्तोऽलङ्कारास्तेऽङ्गदादिवत्।।'**[19]

पण्डितराजस्तु काव्यात्मनो रसस्य रमणीयताप्रयोजकम् अलङ्कारं मेने। यथा-

**'काव्यात्मनो व्यङ्ग्यस्य रमणीयताप्रयोजका अलङ्काराः।।'**[20]

एवं भारतीयकाव्यशास्त्रे अलङ्कारशब्दस्य प्रयोगः मुख्यरूपेण द्विधा भवति सौन्दर्यार्थे सौन्दर्यसाधने च। एवम् अलङ्काराः काव्यस्य अङ्गभूतम् उपकारकं तत्त्वम्।

---

[16] काव्यालङ्कारः

[17] काव्यालङ्कारः

[18] काव्यालङ्कारः **2-81**

[19] साहित्यदर्पणः **10/1**

[20] रसगंगाधरः**, पृ- 248**

काव्ये सौन्दर्याधायकाः अनुप्रासोपमादयः अलङ्क्रियतेनेन इति व्युत्पत्त्या अलङ्काराः उच्यन्ते, किन्तु ध्वनिसम्प्रदायस्योद्भवानन्तरम् अलङ्कारशब्दार्थः सौन्दर्यसाधनेऽनुप्रासोपमादौ प्रसिद्धिं प्राप्तः। अलङ्काराः शब्दार्थयोः धर्माः तथा शब्दार्थद्वारेण व्यभिचरितरूपेण रसोपकारकाः मताः।

भामहस्य काव्यालङ्कारः उद्भटस्य काव्यालङ्कारसारसंग्रहः वामनस्य काव्यालङ्कारसूत्रवृत्तिः रुद्रटस्य काव्यालङ्कारः रुय्यकस्य अलङ्कारसर्वस्वमप्पयदीक्षितस्य चित्रमीमांसा विश्वेश्वरपाण्डेयस्य अलङ्कारकौस्तुभः अलङ्कारमुक्तावलिः अलङ्कारप्रदीप इति ग्रन्थाः प्रसिद्धाः।

अलङ्कारप्रस्थानपरम्परायामाधुनिकेषु पुनरप्यलङ्कारप्रस्थानमुजृम्भमाणं दृश्यते। तत्र रेवाप्रसादद्विवेदी अभिराजराजेन्द्रमिश्रः राधावल्लभत्रिपाठी च मुख्याः। आचार्यद्विवेदिमते अलङ्कारार्थविज्ञानं काव्यम्। वामनोक्तं सौन्दर्यमलङ्कार इति मतमादाय पुनरपि सनातनकविरलङ्कारप्रस्थानमुज्जीवयन् इव प्रतीयते। अस्यां दिशि आचार्यरेवाप्रसादद्विवेदिना साहित्यशारीरकम्, काव्यालङ्कारकारिका च आचार्याभिराजराजेन्द्रमिश्रस्याभिराजयशोभूषणम् आचार्यराधावल्लभत्रिपाठिनोऽभिनवालङ्कारसूत्रं च महत्त्वपूर्णानि ग्रन्थरत्नानि।

**अलङ्कारभेदाः**

आचार्य भरतमते उपमा, रूपकम्, दीपकम्, यमकं चेति चत्वार अलङ्काराः। यथा-

**उपमा रूपकं चैव दीपकं यमकं तथा।**
**अलङ्कारास्तु विज्ञेयाश्चत्वारो नाटकाश्रयाः।।**[21]

भामहेनालङ्कारविवेचनं सविस्तरमकारि। दण्डिमते सप्तत्रिंशदलङ्काराः। परवर्तिन आचार्या उद्भट-वामन-रुद्रट-भोज-मम्मट-विश्वनाथ-पण्डितराजादयोऽलङ्कारं सूक्ष्मेक्षिकया विवेचितवन्तः। विवेचनेनालङ्कारसंख्या सपादशतमिता जाता।

आचार्य भरतमते उपमा, रूपकम्, दीपकम्, यमकं चेति चत्वार अलङ्काराः। यथा-

**उपमा रूपकं चैव दीपकं यमकं तथा।**
**अलङ्कारास्तु विज्ञेयाश्चत्वारो नाटकाश्रयाः।।**[22]

[21] **नाट्यशास्त्रम् 17/43**

भामहेनालङ्कारविवेचनं सविस्तरमकारि। दण्डिमते सप्तत्रिंशदलङ्काराः। परवर्तिन आचार्या उद्भट-वामन-रुद्रट-भोज-मम्मट-विश्वनाथ-पण्डितराजादयोऽलङ्कारं सूक्ष्मेक्षिकया विवेचितवन्तः। विवेचनेनालङ्कारसंख्या सपादशतमिता जाता।

मम्मटेन षट्सप्ततिः अलङ्काराः विवेचिताः। अत्र षड् शब्दालङ्काराः, एकषष्टिः अर्थालङ्काराश्च सन्ति। शब्दालङ्कारेषु वक्रोक्तिः, अनुप्रासः, यमकम्, श्लेषः, चित्रबन्धः, पुनरुक्तवदाभासश्चेति षट्।

अर्थालङ्कारेषु- उपमा, रूपकम्, अपह्नुतिः, समासोक्तिः, अप्रस्तुतप्रशंसा, निदर्शना, अतिशयोक्तिः, दृष्टान्तः, दीपकम्, तुल्ययोगिता, व्यतिरेकः, विभावना, विशेषोक्तिः, अर्थान्तरन्यासः, स्वभावोक्तिः, काव्यलिंगम्, संसृष्टिः संकरश्चेत्यादयः प्रामुख्यं भजन्ते। मम्मटेन प्रायः प्राचीनैः आचार्यैः प्रतिपादिताः अलङ्काराः एव स्वीकृताः। तेन त्रयः नवीना अलङ्काराः उद्भाविताः- विनोक्तिः, समः, अतद्गुणश्चेति। विश्वनाथेन साहित्यदर्पणे दशमपरिच्छेदे द्व्यशीतिः अलङ्काराः विवेचिताः। पण्डितराजेन रसगंगाधारे उपमातः उत्तरालङ्कारान्तम् प्रमुखाणाम् अलङ्काराणाम् निरूपणं कृतम्। एवमलङ्काराः काव्यशास्त्रे विशिष्टं स्थानमधिकुर्वन्तीति।

साहित्यविभागाध्यक्षः,

राष्ट्रियसंस्कृतसंस्थानम्, भोपालपरिसरः

मो.9691942395

[22] नाट्यशास्त्रम् **17/43**

# आचार्यमुकुलभट्टसमतशब्दवृत्तिविमर्शः

**डॉ. किशोरकुमारदलाई**

तत्र साहित्यव्याकरण-मीमांसाद्यनेकेषु शास्त्रेषु वृत्तिविषयः अनेकैः आचार्यैः भिन्नभिन्नप्रकारेण प्रदर्शितोऽस्ति। तत्र नैयायिकामतानुसारम् ईश्वरेच्छा एव वृत्तिरित्युच्यते। वाच्य-वाचकभावो यो सम्बन्धः स वृत्तिरिति महावैयाकरणो नागेशभट्टः कथयति। एवं वृत्त्याः लक्षणं भिन्न-भिन्नशास्त्रेषु भिन्नरीत्या दृश्यते। अलङ्कारशास्त्रे वृत्तिरेव शक्ति-व्यापारादिनाम्ना ज्ञायते। आचार्यमम्मटप्रभृतयः मूर्धन्यालङ्कारिकाः शब्दस्य अभिधा-लक्षणा-व्यञ्जनाख्यं वृत्तित्रयं व्यापारत्रयं वा अङ्गीकुर्वन्ति । परन्तु एतस्मिन् विषये आचार्यमुकुलभट्टस्य सिद्धान्तः सर्वथा भिन्नोऽस्ति। अतः शोधपत्रेऽस्मिन् '**आचार्यमुकुलभट्टसमतशब्दवृत्तिविमर्शः** ' इति विषयमवलम्ब्य विचार्यते। अत्र विचारणीयाः इमे बिन्दवः सन्ति-

1- **मुकुलभट्टः तदीया अभिधावृत्तमातृका च**

**2- अभिधावृत्तमातृकायां निरूपिताः शब्दवृत्तयः**

3- **स्वग्रन्थे अभिधा-लक्षणा-**

4- **निष्कर्षः**

## 1- मुकुलभट्टः तदीया अभिधावृत्तमातृका च-

नवमशताब्धा उत्तरार्धे दशमशताब्द्याः पूर्वार्धे च अयमाचार्यः मुकुलभट्टः स्वजन्मना कश्मीरभुवम् अलंचकारः। अस्यैवाचार्यस्य एकैव कृतिः अभिधावृत्तमातृका सम्प्रति समुपलभ्यते। ग्रन्थस्यास्य विवेचनेन इदं सिद्धं भवति यदयमाचार्यः न केवलं साहित्ये, अपितु व्याकरणे, न्याये, मीमांसाद्यनेकेषु शास्त्रेषु निपुण आसीत् । ध्वनिकारेणाचार्यानन्दवर्धनेन स्थापितस्य ध्वनिसिद्धान्तस्य विरोधिष्वयमाचार्यः अन्यतमो वर्तते।

का खेल बातकर काव्यलिंग का समा बाँध दिया है- *निमग्नमग्नां विफलत्ववारिधौ/ निराश्रितां मां प्रति वक्रभाग्यतः/ अहो ! जगच्छून्यमिदं प्रतीयते/ भृशं हि संतापकरीदृशी दशा।।* देवीदेवनम्

इस प्रकार हम पाते हैं कि संस्कृत भाषा के आधुनिक कवयित्रियाँ अपनी ओजस्विनी लेखनी से नवोन्मेषशालिनी पारंपरिक अलंकार शास्त्र के ज़रिये समकालीन संस्कृत साहित्य की लालित्य योजना की श्रीवृद्धि करने में सतत संलग्न हैं। इन्होंने जहाँ एक ओर परम्परा का निर्वाह किया है और उसमें समसामयिक युगीनधर्मों को भी समाहित किया है, वहीं काव्योपमान के रटे-रटाये उपमान को भी कई अर्थों में खारिज करने का भी भरसक प्रयास किया है। इन संस्कृत कवयित्रियों की रचनाओं की तहक़ीक़ात से यह भी साफ़ है कि हमारे शास्त्रकारों ने किस प्रकार आलंकारिक ढाँचा खड़ा किया जो आज के कवि तथा समीक्षक के लिए उनके समकालीन सामाजिक, राजनैतिक, धार्मिक या सांस्कृतिक मूल्यों को धारदार रूप में अभिव्यक्त करने के लिए एक शानदार औज़ार के रूप में इस्तेमाल किया जा रहा है। वाकई में इससे समाज के तत्कालीन सरोकारों के अन्तः सतहों की चीर-फाड़ करने में बड़ा कारगार साबित हो सकता है लेकिन ज़रुरी है कि संस्कृत के समसामयिक महिला रचनाकारों के ऐसी उम्दा रचनाधर्मिता को और सही ढंग से प्रकाश में लाने के लिए सार्थक प्रयास किया जाना चाहिए। तभी दुनिया की आबादी के इस रचनाकर्त्रियों के साथ न्याय होगा। साथ ही साथ संस्कृत के काव्य उपमान के प्रतीमानों में आखिर क्यों और कैसे तब्दीली आ रही है उसका भी थोड़ा मुआएना हो। इस आलेख का मकसद आज के महिला रचनकारों के रचना संसार को उपभाषित कर दुनिया की आधी आबादी की सर्जनात्मक ऊर्जस्विता को प्रकाश में थोड़ा लाया जा सके। साथ ही साथ इस हक़ीक़त को भी साफ़ किया गया है कि संस्कृत के न केवल पुरुष अपितु महिला रचनाकार भी आधुनिक संस्कृत की ऊष्मा बनाये रखने में महत्त्वपूर्ण योगदान दे रही हैं। इसलिये वे पाश्चात्य विद्वान् इस बात को भूल जाय कि आज की संस्कृत भाषा में कोई जान नहीं है।

असि. प्रोफेसर, साहित्य विभाग
राष्ट्रिय संस्कृत संस्थान, भोपाल परिसर, भोपाल (म.प्र.)

# काव्यशास्त्रेऽलङ्कारस्य वैशिष्ट्यम्

**डॉ.प्रदीपकुमारपाण्डेयः**

काव्यभेदतत्स्वरूपतद्गतदोषगुणालङ्कारादिनिरूपणं यत्र क्रियते तदलङ्कारशास्त्रम्, काव्यशास्त्रम्, साहित्यशास्त्रं वा प्रोच्यते। दृश्यश्रव्यभेदाभ्यां द्विविधमपि काव्यं साहित्यम्। हितेन निरातिशयप्रेमास्पदेन इतरेच्छानधीनेच्छाविषयेण रसेन सहितमुभयत्र व्यञ्जकत्वप्रतिपादकत्वान्यतर सम्बन्धेन विशिष्टभावः साहित्यम्। एवं रसरीति गुणालङ्कारसंयुक्तं काव्यशास्त्रमवलोक्यते। साहित्यं सहितशब्दात् भावे ष्यञि प्रत्यये कृते निष्पद्यते। एवमेव अलम् इत्युपपदात् कृञ्धातोः घञि प्रत्यये कृते अलङ्कारपदं निष्पद्यते। अलङ्कृतिरिति पदं भूषणार्थे प्रयुक्तम्। केवलं शरीरस्याभूषणमलङ्कृतिरिति नोच्यते, यतो हि वैदिककालादेव शब्दार्थयोः वाक्यवाक्यार्थयोर्वा भूषणत्वेन अस्यार्थः सिद्ध्यति। अलङ्कार इति कथनेन सम्यक्कारः पर्याप्तकारो वा इत्यर्थस्यावगतिः। भाषायां यथा व्युतत्पत्त्यर्थं व्याकरणशास्त्रमपेक्षते तथैव काव्ये नैपुण्यायालङ्कारशास्त्रमनिवार्यम्। शब्दशास्त्रे यथा शब्दानुशासनं तथैव काव्यसमीक्षणे काव्यानुशासनमपि व्यपदिश्यते। अलङ्कारशास्त्रज्ञानविहीनः मानवः वैयाकरणो नैयायिको वा व्यङ्ग्यव्यञ्जकगतं रहस्यं ज्ञातुमसमर्थः। शिक्षा, कल्पो, व्याकरणम्, निरुक्तं छन्दो ज्योतिषञ्च षड्वेदाङ्गानि । उपकारकत्वादलङ्कारशास्त्रं सप्तममङ्गमङ्गीकृतम्। शास्त्रस्यास्य वैशिष्ट्यमवलोक्यैव साहित्यं पञ्चमीविद्या रूपेणालङ्कृता। प्रसङ्गानुसारमत्र काव्यशास्त्रे अलङ्कारस्योपादेयता निरुप्यते। प्रथमं तावद् काव्यशास्त्रस्य विषयवस्तुवर्णनं समीक्ष्यते।

**काव्यशास्त्रम्-** कवेः कर्म काव्यमुच्यते। कोशकारेणामरसिंहेन कविः काव्यञ्च पर्याय रूपेणोल्लेखितम्। तद्यथा-"शुक्रो दैत्यगुरुः काव्यमुशना भार्गवः कविः"। यास्केन कविः क्रान्तदर्शी, मननशीलो दूरद्रष्टा च स्वीकृतः। वस्तुतः प्राचीनकाले यः कविशब्दः

ब्रह्मणः सर्वनियन्तुः वाचकः आसीत् स एव कालक्रमेण पद्यगद्यादिलेखकार्थे प्रयुक्तः।"कविर्मनीषी परिभूः स्वयम्भूः" इत्यनेनावगम्यते यद् काव्य रुपीसंसारस्याविष्कर्ता कविरेव। ब्राह्मणो जगतः अवधिःशासात्रेषु वण्यते, परन्तु काव्य रुपी संसारोऽयमसीममनवधिकञ्च। कविरात्मानो प्रतिभाबलेन नवजगतं रचयित्वा तत्र परमानन्दप्रवाहं वितनोति। विषयेऽस्मिन् आनन्दवर्धनस्य ध्वन्यालोकेऽग्निपुराणोक्तं श्लोकत्रयमवलोक्यते-

**अपारे काव्यसंसारे कविरेकः प्रजापतिः।**
**यथास्मै रोचते विश्वं तथैदं परिवर्तते।।**
**श्रृङ्गारी चेतकविः काव्ये जातं रसमयं जगत्।**
**स एव वातरागश्चेन्नीरसं सर्वमेव तत्।।**
**भावानचेतनानपि चेतनवच्चेतनानचेतनवत्।**
**व्यवहारयति यथेष्टं सुकविः काव्ये स्वतन्त्रतया।।**[1]

काव्यशास्त्रमतिप्राचीनम्। वाचां प्रयोगः अलङ्कारसंयोजनञ्च इत्युभयमेव परस्परसम्बद्धम्। वाक्यालङ्कारयोः परस्परसम्बन्धात् वक्तुं शक्यते यद् भारतीयाचार्याः यस्माद्दिनादारभ्य कवित्वशक्त्या अनुप्राणिताः आसन् तस्माद्दिनादेवालङ्कार शास्त्रस्योत्पत्तिरभूत्। राजशेखरमतानुसारमलङ्कार शास्त्रस्य शिक्षआ सर्वप्रथमं भगवान शङ्करः ब्रह्मणे दत्तवान् ब्रह्मा च देवेभ्यः ऋषिभ्यश्च। तदनुसृत्याष्टादश ब्रह्मशिष्याः अष्टादशस्वधिकरणेषु शास्त्रमिदं निबद्धवन्तः। नन्दिकेश्वरो रसम्, धिषणो दोषान् भरतश्च रूपकाणि निरूपितवान्। वेदरहस्यावगतये अलङ्कारशास्त्रस्योपयोगित्वमवधार्यते, यतोहि ऋग्वेदे

**"द्वा सुपर्णा समुजा सखाया---।"**[2]

इत्यस्मिन् श्लोके शरीरे तिष्ठतोः जीवात्मपरमात्मनोः वैलक्षण्यमतिशयोक्त्यलङ्कारेणालङ्कृतम्। वैदिकसाहित्ये कविकाव्यगाथाप्रभृतीनामुल्लेखे उपमारूपकादीनामलङ्काराणां प्रयोगाः समुपलभ्यन्ते। रसविषयेऽपि तत्रावगाहनं कर्तुं शक्यते। वैदिकसाहित्ये सोमसूक्तेषु

---

[1] ध्वन्यालोकः-पृ. 312

[2] ऋग्वेद -2-3-18

ऋग्वेदीयः मन्त्रद्रष्टा सोमः प्रसिद्धः। अयं काव्ये पुरातनचमत्कारित्वमादधाति। ऋग्वेदस्य प्रथममण्डले अग्निर्होता कविक्रतुः सत्यचित्रश्रवस्तमःदेवो देवेभिरगमत् इत्यस्यामृचि कविशब्दस्योल्लेखः।[3]

एवमेव कविशब्दस्य प्रयोगो ब्राह्मणोपन्तिषदगीतापुरामादिष्वपि समुपलभ्यते। या घटना, वृतान्तो कथा वा यधा लोके प्रसिद्धस्तथैव वर्णनेन कविकाव्यशब्दोऽपि बहुषु स्थलेषु प्रयुक्तः। नवार्थगुम्फनं कविकल्पनाप्रसूतं वैशिष्यट्यम्। विषयेऽस्मिन् काव्यमीमांसायामाचार्येण राजशेखरेणोक्तम्-

**भूतपूर्वस्य मन्त्रस्य दर्शनात् ऋषयो यथा।**
**नवगुम्फार्थयोस्तावद् दर्शनात् ककवयोऽभवन्।।**

परवर्तिकाले स्वतन्त्ररूपेण काव्यशास्त्राणां रचनाः अभवन्। तत्र भरतमुनेः नाट्यशास्त्रम्, भामहस्य काव्यलङ्कारः, दण्डिनः काव्यदर्शः, भट्टिकवेः भट्टिकाव्यम्, वामनस्य काव्यालङ्कारसूत्रम्, उदभटस्य काव्यालङ्कार सार सङ्ग्रहः, रुद्रटस्य काव्यालङ्कारः, आनन्दवर्धनस्य ध्वन्यालोकः, राजशेखरस्य काव्यमीमांसा, मुकुलभट्टस्य अभिधावृत्तिमात्रिका, धनञ्जयस्य दशरूपकम्, भट्टतौतस्य काव्यकौतुकम्, भट्टनायकस्य हृदयदर्पणः, महिमभट्टस्य व्यक्तिविवेकः, क्षेमेन्द्रस्य औचित्यविचारचर्चा कवि कष्ठाभरणञ्च, भोजराजस्य श्रृङ्गारप्रकाशः सरस्वतीकण्ठाभरणञ्च, मम्मटस्य काव्यप्रकाशः, सागरनन्दिनः नाटकलक्षणकोशः, रुप्यकस्य अलङ्कारसर्वस्वम्, हेमचन्द्रस्य काव्यानुशासनम्, रामचन्द्रगुणचन्द्रयोः नाट्यदर्पणः, शोभाकरमिश्रस्य अलङ्काररत्नाकरः, वाग्भट्टस्य वाग्भट्टालङ्कारः, जयदेवस्य चन्द्रालोकः, विद्याधरस्य एकावली, विद्यानाथस्य प्रतापरुद्रयशोभूषणं, विश्वनाथस्य साहित्यदर्पणः, केशवमिश्रस्य अलङ्कारशेखरः, शारदातनयस्य भावप्रकाशनम्, शिंगभूपालस्य रसार्णवसुधाकरः, भानुत्तस्य रसमञ्जरी रसतरङ्गिणी च, रूपगोस्वामिनः नाटकचन्द्रिका भक्तिरसामृतसिन्धुश्च, कविकर्णपुरस्य अलङ्कारकौस्तुभः, अप्पयदीक्षितस्य वृत्तिवार्त्तिकं चित्रमीमांसा अलङ्कारप्रदीपः च प्रसिद्धानि।

एतेषां काव्यशास्त्रज्ञानां द्वौ वर्गौस्तः। प्रथमो वर्गः शब्दस्यैव काव्यत्वं वदति द्वितीयश्च शब्दार्थयोः। तत्र प्रथमे वर्गे दण्डी-भोजराज- जयदेव- विश्वनाथ-

---

[3] ऋग्वेद-10-87-21

जगन्नाथादयः द्वितीये वर्गे च भरत- भामह- वामन- कुन्तक- वाग्भट- मम्मट- विद्याधर- महिमभट- क्षमेन्द्रादयः सन्ति। शब्दप्राधान्यवादिना तु शब्दालङ्कारा एव मुख्याः कथ्यन्ते अर्थालङ्काराश्च बाह्याः। अर्थप्राधान्य वादिनां मते अर्थालङ्काराः मुख्यतया काव्यघटकाः शब्दालङ्कारास्तु बाह्याः। भामहाचार्येण स्वकीये सिद्धान्ते उभयालङ्कारयोरुपादेयता अङ्गीकृतम्। व्यञ्जनायां शब्दार्धयोरुभयोरपि व्यापारस्वीकारादङ्गीङ्गीङाभावस्य च विवक्षामात्रप्राणत्वात् काव्यस्य शब्दार्थमयत्वं प्रतिपादितम्। शब्दशक्तिमूल ध्वनावपि अर्थस्य सहकारित्वमर्थस्य व्यञ्जकत्वे च शब्दस्य सहकारित्वम्। विषयेऽस्मिन् काव्यप्रकाशे श्लोकद्वयमवलोक्यते-

**तद्युक्तो व्यञ्जकः शब्दः यत्सोऽर्थान्तरयुक् तथा।**
**अर्थोऽपि व्यञ्जकस्तत्र सहकारितया मतः।।**[4]

अपि च

**शब्दप्रमाणवेद्योऽर्थो व्यनक्त्यर्थान्तरं यतः।**
**अर्थस्य व्यंजकत्वे तच्छब्दस्य सहकारिता।।**[5]

काव्यप्रतिपादनानुसारमलङ्कारशास्त्रस्य मुख्यतः पञ्च प्रस्थानान्यवलोक्यन्ते शब्दार्थसाहित्यप्रस्थानम्, शब्दप्राधान्यप्रस्थानम्, ध्वनिप्रस्थानम्, ध्वनिध्वसंप्रस्थापञ्च। एतेषां संक्षिप्तविवरणमवलोक्यते।

**1. शब्दार्थसाहित्यप्रस्थानम्-** प्रस्थानोऽयं लाघवानुरोधेन साहित्यप्रस्थानमप्युच्यते। अत्र शब्दार्थयोः तुल्यप्राधान्येन काव्यघटकत्वमङ्गीक्रियते। यद्यपि भामहात्पूर्वमपि प्रस्थानस्याचार्याः सम्भाव्यन्ते तथापि काव्यालङ्कार एवास्योपजीव्यमानो ग्रन्थः विद्यते। तत्र “शब्दार्थौ सहितौ काव्यम्” इत्यनेनेदं स्पष्टम्। कविना माघेन अपि “शब्दार्थौ सत्कविरिव द्वयं विद्वानपेक्षते” इत्यनेन अस्यैव प्रस्थानस्य वैशिष्ट्यमाकलयति। वामन- कुन्तक- रुद्रट- मम्मट- हेम- रुद्रट- मम्मट- हेमचन्द्रादयोऽपि अस्य प्रस्थानस्याचार्याः।

**2.शब्दप्राधान्यप्रस्थानम्-** नाम्नोऽनुसारमत्र शब्दस्यैव प्राधान्यमङ्गीकृतम्। दण्डिविरचितः काव्यदर्शः प्रस्थानस्यास्य प्राचीनतमो ग्रन्थः विद्यते । दण्डिना

[4] काव्यप्रकाशः- 2-20

[5] काव्यप्रकाशः -2-23

प्रोक्तमिष्टार्थव्यवच्छिन्नापदावली काव्यमित्यत्र शब्दस्यैव प्राधान्यमर्थस्य विशेषणत्वञ्च। पण्डितराजजगन्नाथोऽपि प्रस्थानस्यास्याचार्यः। तेन "रमणीयार्थप्रतिपादकः शब्दः काव्यम्" इत्यनेनास्य प्राधान्यमुक्तम्।

**3. रसप्रस्थानम्-** रसप्रस्थानस्य प्रमुखाचार्यःभरतमुनिः वर्तते। तेनोक्तं "नहि रसादृते कश्चिदप्यर्थः प्रवर्तते"इत्यनेन स्पष्टम्। अयं नाट्यशास्त्रे षष्ठसप्तमाध्याययोः रसभावादिविषयक पर्यालोचनमकरोत्। रसस्योत्पत्तिविषये तेन स्पष्टरूपेणोक्तं "विभानुभावव्यभिचारिसंयोगाद्रसनिष्पतिः"। तत्र कारणानि विभावाः, कार्याणि अनुभावाः, सहकारीणि च व्यभिचारिभावाः कथ्यन्ते। नाटकेऽभिनयात् काव्यस्यानुशीलनाद्वा यः आनन्दः सहृदयैः साक्षादिवानुभीयते स रसानन्दः। भरतो "आस्वाद्यत्वात्"[6] इति वदति। तेन यो रस्यते आस्वाद्यते स रस इति ज्ञानं भवति। तदनुसारं यथा नानाव्यञ्जनसंस्कृतमन्नं भुञ्जाना रसानास्वादयन्ति सुमनसः पुरुषाः हर्षादींश्चाधिगच्छन्ति तथैव नानाभावाभिनयव्यञ्जितान् वागङ्गसत्त्वोपेतान् स्थायिभावानास्वादयन्ति सुमनसः प्रेक्षकाः हर्षादींश्चाधिगच्छन्ति। एवं विभावानुभावव्यभिचारिभावाः स्थायिभावेन सह फेनबुद्बुदन्यायेन चरन्ति। मम्मटाचार्यः काव्यप्रकाशे रसनिरूपणप्रसङ्गे स्पष्टरूपेण कथयति-

**कारणान्यथ कार्याणि सहकारीणि यानि च।**
**रत्यादेः स्थायिनो लोके तानि चेन्नाटयकाव्ययोः।।**
**विभावा अनुभावास्तत्कथयन्ते व्यभिचारिणः।**
**व्यक्तःस तैर्विभावाद्यैः स्थायी भावो रसः स्मृतः।।**[7]

4.ध्वनिप्रस्थानम्- अस्याचार्यः ध्वन्यालोककारः आनन्दवर्धनः स्वीक्रियते।

**"काव्यस्यात्मा ध्वनिः----"**[8]

इत्यनेन ध्वनिपरम्परायां बुधैरङ्गीकृतम् तथापि स एवास्य प्रस्थानस्य प्रतिष्ठापकः। आनन्दवर्धनेन अभिनवगुप्तपादेन च ध्वनिः एव काव्यात्मत्वं प्रख्यापितम् तत्र ध्वनेः भेदत्रयं निरुपितम् रसध्वनिः, अलङ्कारध्वनिः,वस्तुध्वनिश्च। रसध्वनौ

---

[6] नाट्यशास्त्रम्- 6-678

[7] काव्यप्रकाशः – 4-27-28

[8] ध्वन्यालोकः -1-1

नवरसाः, रसाभासाः, भावाभासाः, भावोदयः, भावशबलता भावशबलता भावसौन्दर्यादयश्च परिगण्यन्ते। अलङ्कारध्वनौ अलङ्कारः वस्तुध्वनौ च वस्तुः व्यज्यते। एवमेव ध्वनिसम्प्रदायानुसारं काव्यत्रिविधं ध्वनिकाव्यम्, गुणीभूतव्यङ्गयं चित्रकाव्यञ्च। तत्र ध्वनिकाव्ये वाच्यात् प्रतीयमानार्थस्यातिवचमत्कारत्वात् ध्वनिकाव्यं सर्वोत्तमम्। वाच्यापेक्षया व्यङ्गयार्थस्याप्रधानत्वात् गुणीभूतव्यङ्गयं मध्यमकाव्यम्। चित्रकाव्ये शब्दार्थालङ्काराणां समावेशो चमत्कारो लभ्यते, काव्यप्राणभूतस्य व्यङ्गयार्थस्य सत्ता तत्र नास्तिति तदधमकाव्यमुच्यते। वस्तुतः अनेन ध्वनितत्वं स्वमनीषया स्वतन्त्ररूपेण प्रदर्शितम् । तदनुसारमङ्गनानां हस्तपादाद्यवयवव्यति रिक्तं लावण्यं स्फुरति तथैव काव्ये वाच्यातिरिक्तचमत्कार जनकः प्रतीयमानानुभवः आनन्ददायकः। तेन तत्रोक्तमपि-

**प्रतीयमानं पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनाम्।**
**यत्रत्प्रसिद्धाक्यवातिरिक्तं विभाति लावण्यमिवाङ्गनासु।।[9]**

मम्मटोऽपि ध्वनिसमर्थने काव्यप्रकाशे स्पष्टरूपेण कथयति

**"इदमुत्तममतिशयिनि व्यङ्गे वाच्याद् ध्वनिर्बुधैः कथितः"।[10]**

अर्थस्तावद् द्विविधः वाच्यः प्रतीयमानार्थश्च। तत्र वाच्यार्थे अलङ्कारादीनां समावेशो भवन्ति प्रतीयमानार्थे च ध्वनेः स्फुरणमवलोक्यते। एव मेव कविराजः विश्वनाथः, रुप्यकः, पण्डितराजजगन्नाथादयश्च ध्वनिसरणिमनुसृतवन्तः।

**5. ध्वनिध्वंसप्रस्थानम्-** प्रस्थानस्यास्याचार्याः रसं तु काव्यात्मेति स्वीकुर्वन्ति, परन्तु ध्वनिवादम नङ्गीकरोति। भट्टनायकः, महिमभट्ट, कुन्तकः, क्षेमेन्द्रः, जयन्तभट्टागयश्च प्रस्थानस्यास्याचार्याः। भट्टनायकः हृदयदर्पण ग्रन्थे ध्वनिवादं खण्यति स्म। व्यञ्जनाव्यापारः तेन न स्वीकृतः। कुन्तकमते वक्रोक्तिः काव्यजीवितम्। वक्रोक्तिः वक्रता विमण्डिता। शास्त्रादिप्रसिद्धशब्दार्थोपनिब्धव्यतिरेकित्वं वक्रोक्तेः लक्षणम्। क्षेमेन्द्रमतीनुसारमौचित्यमेव काव्यस्य जीवितम्। औचित्यविचारचर्चा ग्रन्थे विषयेऽस्मिन् कथयति- "औचित्यं रससिद्धस्य स्थिरं काव्यस्य जीवितम् "। न्यायमञ्जरीकारः जयन्तभट्टः व्यञ्जनाव्यापारं ध्वनेः वा अन्तर्भावनुमाने करोति।

---

[9] ध्वन्यालोकः -1-4

[10] काव्यप्रकाशः -1- 4

एवमेव महिमभट्टोऽपि वयक्तिविवेक ग्रन्थे ध्वनिमनुमाने अन्तर्भावयति। तन्मतानुसारं व्यङ्गयार्थस्तु अमुमेय एव । शब्दस्य एक एव व्यापारः अभिधा नाम । अभिधानोध्योऽर्थस्तु वाच्यार्थ एव। वाच्यार्थं लिङ्गं कृत्वा अनुमेयार्थस्य बोधो भवति। स अनुमेयार्थ एव लक्ष्यार्थं व्यङ्गयार्थश्च। विषयेऽस्मिन् व्यक्तिविवेक तेनोक्तम्-

**अनुमानेऽन्तर्भावं सर्वस्यैव ध्वनेः प्रकाशयितुम्।**
**व्यक्तिविवेकं कुरुते प्रणम्य महिमा परां वाचम्।।**

एतादृशस्य काव्यशास्त्रस्य बहवः विवेच्यविषयाः दृष्टिपथमायान्ति। काव्यसमीक्षात्मकेऽस्मिन् शास्त्रे विविधग्रन्थानां काव्योपजीव्यानि तत्वानि समालोच्यन्ते। काव्यम किमर्थं पठनीयं श्रवणीयं वा, काव्यानुशीलस्य प्रयोजनम्, काव्यहेतुः काव्यस्वरूपम्, काव्यभेदाः रसरीतिगुणालङ्कारादीणाञ्च विवेचनमत्रावलोक्यन्ते। प्रसङ्गानुसार संक्षिप्त काव्य परिचयानन्तरमधुना अलङ्कारस्य वैशिष्टयं प्रतिपद्यते।

**अलङ्कारस्य वैशिष्ट्यम्-** काव्यशास्त्रे अलङ्कारस्यास्ति महत्वपूर्णं स्थानम्। अस्य प्राधान्येन एव काव्यशास्त्रं साहित्यशास्त्रं वा अलङ्कार शास्त्रमित्यभिधानं सङ्गच्छते। अलङ्कार वादिनां मतानुसारमलङ्कार एव काव्यस्यात्मा। भामहस्य काव्यालङ्कारे, दण्डिनः काव्यादर्शे, उदभटस्य अलङ्कारसार सङ्ग्रहे, वामनस्य काव्यालङ्कारसूत्रे, राजशेखरस्य काव्यमीमासांयाम्, रुद्रटस्य काव्यालङ्कारे, मम्मटस्य काव्यप्रकाशे विश्वनाथस्य साहित्यदर्पणे च अलङ्कारवर्णनमवलोक्यते। ध्वनिकारेणानन्दवर्धनेनालङ्काराणामङ्गित्वमुपेक्ष्य ध्वन्यात्वादः प्रतिष्ठापितः किन्तु अलङ्कारं ध्वनिं मत्वा तन्महत्वमाकलयति। वस्तुतः काव्यशरीर शब्दार्थ वृत्तिः रसाव्यभिचारस्थितिः शब्दार्थ द्वारा रसोपकारको यः अनुप्रासोपमाद्यलङ्कारः तस्यालङ्करणं तदैव भवति यदाते रसादितात्पर्येणालोच्य विनिवेशिताः। रससमाहि त चेतसः कवेरपृथग्यत्ननिष्पाद्यत्वमसङ्कारस्यासङ्कारत्वे बीजम्।

'अलं' पूर्वकात् 'कृ' धातोः "अलङ्क्रियते" अनेन, "अलङ्करोति" इति "अलङ्करणम्" वेति व्युत्पत्या धञि प्रत्यये निष्पन्नो अलङ्कारशब्दः। अनने अलङ्क्रियते अनेनेति अलङ्कारः, अलङ्करोति इति अलङ्कारः अलङ्करणं वा अलङ्कारः प्रतीयते। अलङ्कारोऽयं सौन्दर्यार्थे, सौन्दर्यसाधनार्थे च प्रवर्तते। वामनाचार्येम सौन्दर्यमलङ्कारो मत्वा तेनैव काव्यस्य ग्रहयता प्रतिपादयन कथयति स्म "काव्यं ग्राह्यमलङ्कारात्।

सौन्दर्यमलङ्कातः"। सौन्दर्यसाधनानि अनुप्रासोपमारूपयमकादयोऽलङ्काराश्चेद् यथा कटककुण्लादयो वपुरलङ्कुर्वन्ति तथैव शब्दार्थवपुः काव्यमपि अलङ्करोति। एवं रसाग्युत्कर्षजनकत्वे सति अतिशयशोभातिशायि काव्यधर्मत्वलङ्कारत्वम्। विषयेऽस्मिन् यथोक्तम् विश्वनाथेन-

**शब्दार्थयोरस्थिराः ये धर्माश्शोभातिशायिनः।**
**रसादीनुपकुर्वन्तोऽलङ्कारास्तेऽङ्गदादिवत्।।**

अलङ्कारसमर्थने प्रायः सर्वेषामलङ्कार शास्त्राचार्यामासक्तिः येन केनापि रूपेणावलोक्यते। अलङ्कारप्राधान्यमेतेषां केचन काव्यग्रन्थानामुपयोगिताः वैशिष्टञ्च संक्षिप्तरूपेण विचार्यते।

**1. नाट्यशास्त्रम्-** काव्यशास्त्रस्यादिमः आचार्यः भरत एव । संस्कृतसाहित्यजगति पञ्चसंख्यकाजना 'भरत 'इति नाम्ना ज्ञायन्ते। तत्र दशरथस्य पुत्रो भरतः, दुष्यन्तस्य पुत्रो भरतः, मान्धातुः प्रपौत्रो भरतः, जडभरतः, नाट्यशास्त्रप्रवर्तको भरत मुनिश्च। भरत शब्दे 'भ' भावस्य,' र' रागस्य, 'त' तालस्य व्यञ्जकत्वं प्रतीयते, यतोहि भरतमुनेः नाट्यशास्त्रे भावरागतालानां सामञ्जस्यमवलोक्यते। भरतमुनिना उपमादीपकरूपकयमकाः अलङ्कारचत्वारः स्वीकृतः। नाट्यशास्त्रीय-टीकायामभिनवभारत्यामभिनवगुप्ते नोक्तं यदुपमादीपकरूपकालङ्कारोल्लेखेन भरतेन सर्वेऽर्थालङ्काराः प्रायः सङ्ग्रहीताः। यमकालङ्कारोल्लेखेन शब्दालङ्काराणामपि सर्वे भेदाः अन्तर्भाविता-। अलङ्कृतिरितिपदं भूषणार्थे यद् प्रयुक्तं भवति तस्मिन् विषयेऽत्रोक्तम्-

अलङ्कारैर्गुणैश्चैव बहुभिः समलङ्कृतम्।
भूषणैरिव चित्रार्थैस्तद्भूषणमिति स्मृतम् ।।[11]

**2.काव्यालङ्कारः-** ग्रन्थोऽयं षष्ठशतके समुदभवस्य भामहस्य रचना वर्तते। अत्रानेन त्रयः शब्दालङ्काराः द्वात्रिंशदर्थालङ्काराश्च निर्दिष्टाः। तेनोक्तं

**" वक्राभिधेयशब्दोक्तिरिष्टा वाचामलङ्कृतिः।"[12]**

[11] 11. नाट्यशास्त्रम्- 17- 6

[12] 12.अलङ्कारशास्त्रेतिहासः- पृष्ठ 71

इत्यनेन स्पष्टं यद् सर्वेषामलङ्कारांणां बीजं वक्रोक्तिरेव। इयं वक्रता षड्विधावलोक्यते" तद्यथा- वर्णवक्रता, पदपूर्वार्द्धवक्रता, क्रियावैचित्रवक्ता, पदोत्तरार्द्ध वक्रता, प्रकरणवक्रता, प्रबन्धवक्रता च। अलङ्कार प्राधान्यविषयकस्य निदर्शनस्थानीयास्य ग्रन्थस्य प्रथमपरिच्छेदे तेनोक्तम्-

**रूपकादिरलङ्कारस्तस्यान्यैर्बहुधोदितः।**
**न कान्तमपि निर्भूषं विभाति वनिताननम्।।**[13]

**3.भट्टिकाव्यम्-** अस्य रचयिता भट्टिः षष्ठशताब्द्याः अन्तिमे भागे अजायत्। काव्यग्रन्थेऽस्मिन् शब्दानां सन्तिद्वाविंशसर्गाः सन्ति। दशमसर्गे पञ्चाशदलङ्काराणामुदाहरणानि दीयन्ते। यमकाकङ्कारस्य बहुविधत्व मने नोदा हृतम्। तद्यथा-यग्मपादयमकम्, चक्रवालयमकम्, समुद्राक्यम्यमकम्, काञ्चीयमकम्, यमकावली, अयुग्मपादयमकम्, पाद्यान्तयमकम्, विपक्षययमकम्, मध्यान्तयमकम्, गर्भयमकम्, सर्वयमकम्, महायमकम्, आद्यान्तयमकञ्च,।अनेन असामान्य वैदूष्येन नूतनालङ्काराः निर्निताः।

**4.काव्यादर्शः-** अयं रचना सप्तमशतकस्योत्रराधें प्रादुर्भतस्य दण्डिनः वर्तते। भामहादनन्तरमयमेवालङाकारशात्रस्य प्रधानाचार्याः। अनेन भरतस्य नाट्यशास्त्रानुसारमुपमादीपक प्रभृतीनामलङ्काराणां भेदाः निरुपिताः। तेन उपमा- रूपक- सन्देह- अन्वय- उत्प्रेक्षादयोऽलङ्काराः स्वतन्त्ररूपेण प्रदर्शिताः। काव्यदर्शे तेन हेतु- सूक्ष्मलेशाः अलङ्काराः वर्णिताः। भामहेन उपेक्षितः स्वभावोक्त्यलङ्कारः अनेन स्वीकृतः। तेन व्यापकदृष्टया गुणाः अलङ्काररूपेण परिगणिताः। यथोक्तं तेन-

**काव्यशोभाकरान् धर्मानलङ्कारान् प्रचक्षथे।**
**कश्चिन्मार्ग विभागार्थमुक्तः प्रागध्यलक्रियाः।।**[14]

**5. अलङ्कारसारसङ्ग्रहः-**अस्य रचयिता उदभट्टः काश्मीरनरेशस्य जयापीडस्य सभापतिरासीत। जयापीडः 779-813 ईस्वीपर्यन्ते राज्यमकरोत्। उदभट्टोऽयमलङ्कारसार सङ्ग्रहे एक चत्वारिशंदलङ्काराः सलक्षणोदाहरणैः प्रतिपादिताः। ग्रन्थोऽयं षड्वर्गैः विभक्तः। तत्र प्रथमे वर्गे पुनरुक्तवदाभासः,

---

[13] काव्यालङ्कारः -1-13

[14] अलङ्कारशास्त्रेतिहासः-पृष्ठ 157

च्छेकानुप्रासः, अनुप्रासः, अनुप्रासः, त्रिविधावृत्त्रयः, लाटानुप्रासः, उपमा, रूपकः दीपकादयश्च वर्णिताः। द्वितीयवर्गे आक्षेपः, अर्थान्तर न्यासः, व्यतिरेकः समासोक्तिः विभावनादयश्चालोच्यन्ते। तृतीयवर्गे यथासङ्ख्यम्, उत्प्रेक्षा, स्वभवोक्तश्च निरुप्यन्ते। चतुर्थवर्गे रसवत्, उर्जस्वी, पर्यायेक्तिः, समाहितः, उदान्तादयोऽलङ्काराश्चालोचिताः। पञ्चमवर्गे अपह्नुतिः, विशेषोक्तिः, विरोधः, तुल्ययोगिता, अप्रस्तुतप्रशंसा, व्याजस्तुतिः, निदर्शना, उपमेयोपमा, सहोक्तिः, संकरादयश्च निरुप्यन्ते। षष्ठवर्गे चानन्वयः ससन्देहः, संसृष्टिः, भावकः दृष्टान्तादयश्च निर्दिश्यन्ते। ग्रन्थस्यास्य चतुर्थपरिच्छेदे रसवदलङ्कार प्रसङ्गे तेनोक्तम्-

**रसवद्दर्शिनस्पष्टे श्रृङ्गारादिरसादयम्।**
**स्वशब्दस्थायिसञ्चारि विभावादिस्तदास्पदम्।।**

**6. काव्यालङ्कारसूत्रम्-** अस्य रचयिता वामनः अपि काश्मीरराजस्य जयापीडस्य सभापण्डितः आसीत्। अनेन अष्टमशतके काव्यशास्त्रे नवीनसम्प्रदायत्वेन रीतिसम्प्रदायः स्थापितः। तेन स्पष्टरूपेणोक्तं"काव्यस्यात्मा रीतिः"। काव्यालङ्कारसूत्रं त्रिधा विभजयते सूत्रम्, वृति उदाहरणञ्च। सूत्रं वृत्तिश्चास्य मौलिकी रचना उदाहरणानि च विविधेभ्यो ग्रन्थेभ्यः आहृतानि। सः काव्यस्य शोभाधायकाः धर्माः गुणाः अलङ्काराश्च इति स्वीकरोति। अलङ्कारविवेचने अस्य मौलिकता दृश्यते। तदनुसारमुपमा एव मुख्यः अन्येऽलङ्कारा उपमायाः प्रपञ्चाः विद्यन्ते। "सादृश्यात् लक्षणा वक्रोक्तिः" इति कथनेन अयं दण्डिभामयोः वक्रोक्तेः प्राधान्यत्वं निरस्त्य पृथगलङ्कारत्वेन प्रतिपादयति।

**7. काव्यालङ्कारः-** अस्य रचना नवमशतके रुद्रटेन विहितः। षोडशाध्यायात्मकेऽस्मिन् ग्रन्थे काव्यशास्त्रस्य प्रायः सर्वे विषयाः समालोचिताः। अलङ्कारसम्प्रदायेऽयं मुख्याचार्य रूपेण स्वीकृतः। अनेन अलङ्कारविभाजने वैज्ञानिकपन्था आलम्बिता। तेन अनुप्रास- यमक- श्लेष- वक्रोक्ति- चित्रालङ्कारादयः निरुपिताः। अनेनाष्टविधाः श्लेषाः वर्ण- पद- लिङ्ग- भाषा- प्रकृति- प्रत्यय- विभक्ति- वचनेति सोदाहरणमुदाहृताः। भाषाश्लेषोदाहरणे संस्कृत- प्राकृत- पैशाची- शौरसेनीभाषाभिः रचितः एक श्लोकः प्रदतः। परवर्तिनः आलङ्कारिका एवं विधं सरणिमनुसरन्ति।

**8. ध्वन्यालोकः –**अस्य रचयिता ध्वनिप्रस्थानसंस्थापकाचार्यः आनन्दवर्धनः काश्मीरराज्ञः अवन्तीवर्मणः सभाकविः आसीत्। अवन्तीवर्मा काश्मीरे 855 ईस्वीतः 883 ईस्वीपर्यन्तं राज्यमकरोत्। ध्वन्यालोकतानुसारं कस्यचिदलङ्कारस्यालङ्कारत्वं रसादितात्पर्येण विवक्षा, प्राधान्येनाविवक्षा, काले ग्रहणम्, काले त्यागः, अतिनिर्वाहेच्छायाः अभावः, निर्वाहेऽपि रसाङ्गत्वेन समीक्षणञ्चेति बीजम्। ग्रन्थस्यास्य द्वितीये उद्योते तेनोक्तम्-

**ध्वन्यात्मभूते श्रृङ्गारे समीक्ष्य विनिवेशितः।**
**रूपकादिरलङ्कारवर्ग एति यथार्थताम्।।**
**विवक्षा तत्परत्वेन नाङ्गित्वेन कदाचन।**
**काले च ग्रहणत्यागौ नातिनिर्वर्हणैषिता।।**
**निर्व्यूढावपि चाङ्गत्वे यत्नेन प्रत्यवेक्षणम्।**
**रूपकादिरलङ्कारवर्गस्याङ्गत्वसाधनम्।।**[15]

**9. काव्यमीमांसा-**अस्य रचयिता राजशेखरः महाराष्ट्रस्य मुकुटमणिः। विद्धशालभञ्जिकानुसारमस्य माता शीलवती, पिताः दुर्दुकः विदुषी पत्नी च चौहानवंशसमुत्पन्ना अवन्तीसुन्दरी। अनेन काव्यमीमांसायामष्टादशप्रकरणानि उदधृतानि। तेन सूत्र-वृत्ति- भाष्यप्रभृततीनां व्याख्यानं कृतम्। तृतीयाधिकरणे रूपकच्छलेन काव्यपुरुषोत्पतिरयमवर्णयत्। तदनुसारं काव्यपुरुषस्य माता सरस्वती, साहित्यविद्या पत्नी, शब्दार्थौ शरीरम्, संस्कृतं मुखम्, प्राकृतं बाहुः, अपभ्रंशो जघनम्, पैशाचः पादौ रसश्चात्मा विद्यते। तदनुसारं “गुणवदलङ्कृतश्च वाक्यमेव काव्यम्” इति काव्यलक्षणमनुद्दीश्य काकुः अलङ्कार उपेक्षितः।

**10. काव्यप्रकाशः –**अस्य रचनाकारः आचार्यः मम्मटः। अस्यसमय- एकादशशताब्द्या उत्तरार्धमनुमीयते। निखिलशास्त्रनिष्णातो वाग्देवतावतारः शैवागमानुययी मम्मटः काश्मीरदेशीयः जैयटस्य पुत्रः कैयटऔवटयोः ज्येष्ठभ्राता चासीत्। काव्यलक्षणनिरूपणप्रसङ्गेऽनेनोक्तं **“तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापि”**[16] माध्यमेन ज्ञायते यदयमप्यलङ्काराचार्यः। काव्यप्रकाशे दशोल्लासाः सन्ति यत्र भागत्रयमवलोक्ये। भागत्रयमत्र कारिका- वृत्ति-उदाहरण रूपेण विवेचितम्। तत्र

---

[15] ध्वन्यालोकः -2-17-18-19

[16] काव्यप्रकाशः-पृष्ठ19

कारिका वृतिश्चास्य मौलिकी रचना उदाहरणानि च विविधकाव्येभ्यः आहृतानि । ग्रन्थस्यास्याष्टमोल्लासे तेनालङ्कारलक्षणं विवेचितम्। तद्यथा-

उपकुर्वन्ति तं सन्तं येऽङ्गद्वारेण जातुचित्।
हारादिवदलङ्कारास्तेऽनुप्रासोपमादयः।।[17]

काव्यप्रकाशस्य नवमे दशमे चोल्लासे शब्दालङ्कारणां लक्षणोदाहरणान्यवलोक्यन्ते। तत्र वक्रोक्ति- अनुप्रास- यमक- श्लेष- चित्रालङ्काराणां सभेदविवेचनं वर्तन्ते। दशमे उल्लासे उपमा- अनन्वय- उपमेयोपमा- उत्प्रेक्षा- ससन्देह- रूपक- अपह्नुति- श्लेष- समासोक्ति- निर्दशना- अप्रस्तुतप्रशंसा- अतिशयोक्तिप्रतिवस्तूपमा, दृष्टान्त- दीपक- तुल्ययोगिता- व्यतिरेक- आक्षेप- विभावना- विशेषोक्ति- यथासंख्य- अर्थान्तरन्यास- विरोधाभास- स्वऱभावोक्ति- व्याजस्तुति- सहोक्ति- विनोक्ति- परिवृत्ति- भाविक- काव्यलिङ्ग- पर्यायोक्ति- उदान्त- समुच्चय- पर्याय- अनुमग्र- परिकर- व्याजोक्ति- परिसंख्या- कारणमाला- अन्योन्य- उत्तर- सूक्ष्म- सार- असङ्गति- समाधि- सम- विषम- अधिक- प्रत्यनीक- मीलित- एकावली- स्मृति- भ्रान्तिमान- प्रतीप- सामान्य- विशेष- तद्गुण- अतद्गुण- व्याघात- संसृष्टि- संकरादयोऽर्थालङ्काराणां लक्षणोदाहरणान्यवलोक्यन्ते। इत्थं मम्मटेन काव्यप्रकाशस्य नवमोल्लासे पञ्चशब्दालङ्काराः दशमोल्लासे च एकषष्ढि अर्थालङ्काराः सम्यगरूपेण विवेचिताः।

इत्थमेव विश्वनाथस्य साहित्यदर्पणे, जयदेवस्य चन्द्रालोके, अप्पयदीक्षितस्य कुवलयानन्दे चालङ्काराणां विशद् वर्णनमनलोकयितुं शक्यते। एवमेवालङ्कारसंख्याविषये विद्वत्वर्येषु मतैक्यं नास्ति। विषयेऽस्मिन् काव्यप्रकाशस्य दशमोल्लासे संख्याविषयकश्लोकाः दृश्यन्ते-

**उपमा रूपकं चैव दीपको यमस्तथा।**
**चत्वार एवालङ्काराः भरतेन निरुपिताः।।**
**वामनेन त्रयस्त्रिंशद् भेदास्तस्य निरुपिताः।**
**पञ्चात्रिंशद्विधश्चायं दण्डिना प्रतिपादितः।।**
**नवत्रिंशद्विधश्चायं भामहेन प्रकीर्तितः।**
**चत्वारिंशद्विधश्चैव उद्भटेन प्रदर्शितः।।**
**द्विपञ्चाशद्विधः प्रोक्तो रुद्रटेन ततः परम्।**
**सप्तषष्टिविधः प्रोक्तः प्रकाशे मम्मटेन च।।**
**शतधा जयदेवेन विभक्तो दीक्षितेन च।**
**चतुर्विंशतिभेदास्तु कृता एकशतोत्तरा।।[18]**

---

[17] काव्यप्रकाशः- 8-67

इत्थं निष्कर्षरूपेण कथयितुं शक्यते यद् संस्कृतसाहित्ये काव्यशास्त्रस्यास्ति सुदीर्घा परम्परा संस्कृतवाङ्मये वैदिककालादेव प्रवाहनित्यतां भजन्ती काव्यशास्त्रं विशिष्टं स्थानं प्रापयति। वैदिकवाङ्मये समुत्पन्नमलङ्कारशास्त्रमाधुनिकयुगे प्रवृद्धं सहजव्यावहारिकसंस्कृतभाषा स्वरूपप्रदर्शकञ्च। अलङ्कारशब्दः अलङ्क्रियतेऽनेनेति करणव्युत्पत्तिनिष्पन्नो अनुप्रासोपमादिबोधकः परन्तु अलङ्कृतिरलङ्कार इति भावव्युत्पन्नो दोषापगमगुणालङ्कारसंवलनकृतसौन्दर्यपरः। तत्प्रतिपादकत्वादेवास्या-लङ्कार शास्त्रम्। एतादृशेषु अलङ्कारशास्त्रेषु, काव्यशास्त्रेषु साहित्यशास्त्रेषु वा अलङ्कारस्य महत्त्वपूर्णं स्थानं विद्यते। यथा शरीरात् लावण्यविच्छेदो न सम्भवति तथैव वाक्यात् तदीयं सौन्दर्यं वियोजयितुं न शक्यते। वाचां प्रयोगः अलङ्कारसंयोजनञ्च उभयमेव परस्परसम्बद्धम्। अत एव काव्यशास्त्रे अलङ्कारनिदर्शनं काव्यच्छटादयो यदि उपलभ्यन्ते तर्हि तत्र न कोऽपि विस्मयावकाशः।

दिल्लीप्रशासने भाषाप्रवक्ता
सर्वोदय बाल विद्यालयः,
ओ ब्लौक, मंगोलपुरी, दिल्ली-83
चलभाषः-7678188692

[18] काव्यप्रकाशः-पृष्ठ 440

# काव्यशास्त्रे अलङ्कारप्रस्थानम्

**डा. मनमोहन तिवारी**

साहित्यदर्शने अर्थ: शिवरूप: वाक् च तस्य शक्तिरूपे स्वीक्रियते, अर्थ: शम्भु: शिवा वाणी चेति। महाकवि: कालिदासोप्याह, रघुवंशमहाकाव्ये यथा -

**वागर्थाविव सम्पृक्तौ जगत: पितरौ पार्वतीपरमेश्वरौ वन्दे इति।[1]**

अत्र सुरम्योपमादर्शनं प्रतिभाति , तथा अर्थ: शब्दो वा अपृथक्भूतौ काव्ये भवत: यथा शिव:, तस्य शक्ति: पार्वती(चित्-शक्तिरूपापरावाक्)[2] परस्परं सम्पृक्तौ स्त:। तत्र शब्दार्थशरीरन्तावत्काव्यमिति तत्र शब्दगता: चारुत्वहेतव: शब्दालङ्कारा:, अर्थगताश्चारुत्वहेतव:अर्थालङ्कारा: इति श्रूयन्ते,तदनतिरिक्तवृत्तय:वृत्तय: या: काश्चित्परुषाकोमलाग्राम्येति तदपि श्रुता:। अचलस्थितयो माधुर्यौज:प्रसादादय: गुणा: अङ्गिन: रसस्य धर्मा:सन्ति। रीतिरपि पदसंघटनारूपत्वात् भवति। वस्त्वलङ्काररसादिप्रभेदप्रभिन्न: त्रिरूपोध्वनिर्नामा कश्चन प्रतीयमान:काव्यात्मेति व्यवस्थित: पदार्थ: सोऽपि गत:श्रवणगोचरमिति।

अलङ्कारवादिन: आचार्या: काव्यशोभासम्वर्धकान् धर्मान् अनुप्रासोपमादीन् अलङ्कारान् प्रचक्षते ईति। ते काव्यनिष्ठं सौन्दर्यमेव अलङ्कारतया निरूपयन्ति

---

1 वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये ।
जगत: पितरौ वन्दे पार्वती परमेश्वरौ ॥ रघुवंशमहाकाव्यम्, प्र.सर्ग;
गिरा अर्थ जल बीचि सम,कहियत भिन्न न भिन्न ।
बन्दउँ सीताराम पद,जिन्हहि परम पद खिन्न ॥ रामचरितमानस,बालकाण्ड

2 उमा,कात्यायनी,गौरी,काली,हैमवती,ईश्वरी,शिवा । अमरकोष:
चिति:,प्रत्यवमर्शात्मा परावाक् स्वरसोदिता । शैवदर्शनम् ।

। यथा- सौन्दर्यमण्डितस्य कस्यचित् वपुषो हारादय: शोभाम् अतिशाययन्ति तथा गुणवत: काव्यस्य अनुप्रासोपमादय:शोभां पुष्यन्ति इत्याशय:। एतेन अलङ्काराणां शब्दार्थगतत्वं निश्चप्रचं भाति। उक्तचारुत्वहेतुभ्यो पृथक् अलङ्कारनामा कोऽयं पदार्थ:, का चास्य व्युत्पत्ति:,कियन्त:भेदा: इतिसर्वं यथोपनिबद्धं काव्यशास्त्रेषु तद्वक्ष्यते।

**अलङ्कारनिरूपणम्-**

प्रतिष्ठन्ते परम्परया व्यवहरन्ति येन मार्गेण तत् प्रस्थानम् । अलङ्कारप्रधानं प्रस्थानमिति अलङ्कारप्रस्थानम्, रसादिभिन्नव्यङ्ग्याभिन्नत्वे सति शब्दार्थान्यतरनिष्ठा या विषयितासम्बद्धावच्छिन्ना चमत्कृतिजनकतावच्छेदकता तदवच्छेदकत्वम् ।अनुप्रासादिविशिष्टशब्दज्ञानादुपमादिविशिष्टार्थज्ञानाच्च चमत्कारोदयात्तेषु लक्षणसमन्वय;।शब्दार्थयोर्ज्ञाननिष्ठचमत्कृतिजनकताया: विषयितयावच्छेदकत्वेन तद्विशेषणीभूतानुप्रासोपमादे: तन्निष्ठावच्छेदकतावच्छेदकत्वात्। रसवदाद्यलङ्कारसंग्रहाय व्यङ्ग्योपमादिवारणाय च भेदद्वयगर्भसत्यन्तोपादानम्। एवमेव अलङ्करोति , अलङ्क्रियते वा अनेन इति अलङ्कार:, अलङ्कृतिर्वा। काव्ये अस्य ध्वनित्वेऽपि क्वचिद्वाच्यत्वं भवत्येव। यथाप्रसङ्गं् काव्यशास्त्रकारै:तत्तदलङ्कारग्रन्थेषु उपनिबद्धम् अलङ्कारस्य लक्षणम् इह निरूप्यते। भामह: निगदति यत्,

**वक्राभिधेयशब्दोक्तिरिष्टवाचामलङ्कृति:,**
**न कान्तमपि निर्भूषं विभाति वनिताननम् ॥**[1]
**सौन्दर्यमलङ्कार:॥**[2]
**काव्यशोभाकरान् धर्मानलङ्कारान् प्रचक्षते।**[3]
**अङ्गीकरोति य: काव्यं शब्दार्थावनलङ्कृती।**
**असौ न मन्यते कस्मादनुष्णमनलङ्कृती॥**[4]
**उपकुर्वन्ति तं सन्तं येऽङ्गद्वारेण जातुचित् ।**
**हारादिवदलङ्कारास्तेऽनुप्रासोपमादय: ||**[5]

1 काव्यालङ्कार:,प्र.परिच्छेद:,13
2 काव्यालङ्कारसूत्राणि,॥ प्र. प्र.2
3 काव्यादर्श: द्वि.परिच्छेद: 1
4 चन्द्रालोक: 1-8
5 काव्यप्रकाश: अ. 67

**शब्दार्थयोरस्थिरा ये धर्मा: शोभातिशायिन:।**
**रसादीनुपकुर्वन्तोऽलङ्कारास्तेऽङ्गदादिवत् ॥[6]**

काव्यं ग्राह्यमलङ्कारात्, अथवा सालङ्कारस्य काव्यता , उतवा सर्वत्र सालङ्कारौ शब्दार्थौ काव्यं क्वचित्तु स्फुटालङ्कारविरहेऽपि न काव्यत्वहानि,: एभिर्वाक्यै: निश्चीयते यत्, अलङ्काराणां काव्ये महन्महत्त्वं भवति।न कान्तमपि निर्भूषं विभाति वनिताननम् अर्थात्, गुणगौरवसम्पन्नापि वनिता यथा सालङ्कारैव शोभते, न तथा अलङ्कारविहीना। एवमेव काव्येषु अलङ्कारा: शब्दार्थयो: सौन्दर्यं समेधयन्त: काव्यात्मतत्त्वं रसमुत्कर्षयन्ति इति।क्वचिद् वाच्यमुखेन उपमादीनाम् अलङ्काराणां प्रवृत्तिविषयता दृश्यते, क्वचिच्च व्यङ्ग्यमुखेन वा अनुभूयते । यद्यपि लोके संयोगवृत्या हारादीनां स्थिति:,समवायवृत्या तु गुणानां, किन्तु काव्ये गुणालङ्कारयो: समवायवृत्यैव भवति स्थिति: इति भेद; चास्ति। ये वाचकवाच्यलक्षणाङ्गातिशयमुखेन मुख्यरसम् उपकुर्वन्ति ते अलङ्कारा: यत्र तु नास्ति रस: तत्रोक्तिवैचित्र्यमात्रपर्यवसिता: भवन्ति इति अभिप्राय:। यथा- हारादयोऽपि कामिनीसौन्दर्य्ये सति तदङ्गानामुत्कर्षका:, कुरूपाङ्गे तु दृष्टिवैचित्र्यमात्रहेतवस्तदेवाह मम्मटाचार्य:।[7]

अलङ्कारप्रस्थानवादिन: भामहदण्डीप्रभृतय:आचार्या:काव्ये अलङ्कारस्यैव प्राधान्यं भजन्ते, ते रसवदादिष्वेव रसभावादीनामन्तर्भावमासादयन्तीति। एतावता रसवत्प्रेयोर्जस्विसमाहितादय: इति चत्वार:रसवदलङ्कारा: इति मन्यन्ते।ते काव्यस्य सर्वाणि चमत्काराधायकतत्त्वानि अलङ्कारतया आमनन्ति। काव्यशास्त्रस्योपकारकं नियामकं शास्त्रमेव काव्यशास्त्रमिति कथ्यते। आदौ काव्यशास्त्रस्य कृते काव्यालङ्कार इति शब्द:प्रयुज्यतेस्म। आचार्यभामहस्य कृति: काव्यालङ्कार:,उद्भटस्य ग्रन्थ:,काव्यालङ्कारसारसंग्रह:,रुद्रटस्य काव्यालङ्कार:,वामनस्य काव्यालङ्कारसूत्रमिति प्रचलितमस्ति ।एतन्मते अलङ्कार एव काव्यस्य निखिला चमत्कृति:भवति,अलङ्काराभावे काव्यस्य कल्पनम् अग्ने:अनुष्णत्वज्ञापनमेव

---

6 साहित्यदर्पण: दशम: परि. 1

7 काव्यप्रकाश: 8-67

प्रतिभाति।

**अलङ्काराणां विकास: -----**

यद्यपि अलङ्काराणां निवेषस्तु वेदेषु पुराणेषु काव्येषु सर्वत्र दृश्यते तथापि नाट्यशास्त्रे चत्वार: अलङ्कारा उल्लिखितास्सन्ति, अग्निपुराणे षोडश -अलङ्काराणां नाम श्रूयते। अनन्तरं भामहेन काव्यालङ्कारः षष्ठ्यां शताब्द्यां विरचितः, तत्र अष्टत्रिंशदलङ्काराणां चर्चा कृता अस्ति, महाकविना दण्डिना सप्तत्रिंशदलङ्काराणां निरूपणं कृतं विद्यते, वामनः एकत्रिशंदलङ्कारान् निरूपयामास। रुद्रटःषड्विशतिः अलङ्कृतीः बोधयाञ्चकार। उद्भटस्तु एकचत्वारिंशदलङ्कारान् प्रतिपादयामास। काव्यप्रकाशे आचार्य: मम्मटः सप्तषष्टि-अलङ्कारान् तथा विश्वनाथः चतुरसीति-अलङ्कारान् वर्णयामास। क्रमेस्मिन् अप्पय्यदीक्षितेन अष्टादशाधिक- शतमलङ्काराः स्वीकृताः।जयदेवेन कृते चन्द्रालोके शतमलङ्कारा: वर्णिताः,पण्डितराज-जगन्नाथकृते रसगङ्गाधरे अशीत्यधिकशतम् अलङ्कारा: विविच्यन्ते।

अलङ्काराणां वर्गीकरणम्-अलङ्कारसर्वस्वस्य निर्मात्रा रुय्यकेण सर्वेऽप्यलङ्काराः सप्तभागेषु विभाजिताः।तदाधारमेव परवर्तिभिरपि काव्यशास्त्रज्ञैः सप्तधा विभाजनं क्रियते। यथा-

(1)सादृश्यमूलका: अलङ्काराः _उपमा,उपमेयोपमा,अनन्वयादयः,सादृश्यमूलकाः चतुर्धा विभज्यन्ते-भेदाभेदप्रधानाः आरोपमूलकाभेदप्रधानाः, ,अध्वयसायमूलकाभेदप्रधानाः, गम्यौपम्यमूलकाश्च।

(2)विरोधमूलका; वैषम्यमूलका: वा अलङ्काराः-असङ्गतिः ,विषमः विरोधाभासः विशेषोक्तिः समादयः।

(3)क्रममूलकाः शृंखलाबन्धमूलकाः वा अलङ्काराः-कारणमाला, एकावली, मालादीपकम्, सारादयः।

(4)न्यायमूलका: अलङ्काराः-एते त्रिधा विभज्यन्ते- तर्कन्यायमूलकाः, वाक्यन्यायमूलकाः लोकन्यायमूलकाश्च। काव्यलिङ्गम्, अनुमानम्, यथासंख्यम् ,प्रतीपम् तद्गुणादयः।

(5)कारण-कार्य-संबन्धमूलकाः अलङ्काराः-विभावना, हेतूत्प्रेक्षा, अतिशयोक्त्यादयः।

(6)निषेधमूलकाः -अपह्नुतिः, व्यतिरेकः, विनोक्त्यादयः।

(7)गूढार्थप्रतीतिमूलकाः- पर्यायोक्तिः, समासोक्तिः, व्याजस्तुतिः ,व्याजनिन्दा मुद्रादयः।

शब्दार्थदृष्ट्या अलङ्कारास्त्रिधा विभाज्यन्ते- शब्दालङ्काराः, अर्थालङ्कराः, उभयालङ्काराश्च।तत्र शब्दालङ्कारा अनुप्रासादयः। अर्थालङ्कारा उपमारूपकोत्प्रेक्षादय:।उभयालङ्कारे श्लेषगृह्यते, शब्दालङ्कारत्वाद् अर्थालङ्कारत्वाच्च।

तत्र शब्दपरिवृत्त्यसहरूपाद् भेदात् शब्दालङ्कारत्वं तथा शब्दपरिवृत्तिसहत्त्वम् , अर्थालङ्कारत्वम्, इति उभयो: भेद:।

**वास: प्रधानं खलु योग्यताया:**
**वासोविहीनं विजहाति लक्ष्मी:।**
**पीताम्बरं वीक्ष्य ददौ तनूजां,**
**दिगम्बरं वीक्ष्य विषं समुद्र: ॥**

**तत्रानुप्रासो यथा - अनुप्रास: शब्दसाम्यं वैषम्येऽपि स्वरस्य यत्।**

आदाय बकुलगन्धान् ,अन्धीकुर्वन् पदे-पदे भ्रमरान्।
अयमेति मन्द-मन्दं;कावेरी-वारि-पावनः पवनः॥[8]

**यमकालङ्कारः -**

सत्यर्थे पृथगर्थायाः स्वर- व्यञ्जन-संहतेः।

क्रमेण तेनैवावृत्तिर्यमकं विनिगद्यते ॥

उदाहरणम् -

नवपलाश-पलाशवनं पुरः ;स्फुटपराग -परागत- पंकजम्।
मृदुल- तान्त -लतान्तमलोकयत्; स सुरभिं सुरभिं सुमनोभरैः॥"[9]

**श्लेषालङ्कारः-**

8 साहित्यदर्पण: द. परि. 03

9 साहित्यदर्पण: द.परि .08

**श्लिश्ष्टैः पदैरनेकार्थाभिधाने श्लेष इष्यते॥"**

प्रतिकूलतामुपगते हि विधौ विफलत्वमेति बहुसाधनता॥
अवलम्बनाय दिनभर्तुरभून्न पतिष्यतः करसहस्रमपि॥[10]

**अर्थालङ्कारे उपमा यथा -**

**साम्यं वाच्यमवैधर्म्यं वाक्यैक्य उपमा द्वयोः॥**

हंसीव कृष्ण! ते कीर्तिः स्वर्गङ्गामवगाहते ॥[11]

**रूपकालङ्कारो यथा - तद्रूपकमभेदो य उपमानोपमेययो:॥**

ज्योत्स्ना-भस्मच्छुरण-धवलाविभ्रती तरकस्थी-
न्यन्तर्धान-व्यसनरसिका रात्रिकापालिकीयम् ।
द्वीपाद् द्वीपं भ्रमति दधती ,चन्द्रमुद्रा-कपाले,
न्यस्तं सिद्धाञ्जनपरिमलं लाञ्छनस्यच्छलेन ॥[12]

**अर्थान्यतरन्यासो यथा - सामान्यं वा विशेषेण विशेषस्तेन वा यदि।**

कार्यं च कारणेनेदं कार्येण च समर्थ्यते ॥
साधर्म्येणेतरेणार्थान्यतरन्यासोऽष्टधा ततः ।
बृहत्सहाय; कार्यान्तं क्षोदीयानपि गच्छति।
सम्भूयाम्भोधिमभ्येति महानद्या नगापगा ॥[13]

निदर्शनालङ्कार:

**सम्भवन्-वस्तु-सम्बन्धोऽसम्भवन्वापि कुत्रचित्।**
**यत्र बिम्बानुबिम्बत्वं बोधयेत् सा निदर्शना ॥**

इदं किलाव्याजमनोहरं वपु:
तप:क्षमं साधयितुं य इच्छति ।
ध्रुवं स नीलोत्पलपत्रधारया,
समीलतां छेत्तुमृषिर्व्यवस्यति॥[14]

---

10 साहित्यदर्पण: द, परि.11

11 कुवलयानन्द: प्र. अ.

12 काव्यप्रकाश: द.उ.93.401

13 चन्द्रालोकः

अत्रोदाहरणक्रमे भूयांसि काव्यानि तत्तदलङ्कारप्रस्तुत्यर्थं निरूपितानि सन्ति ।तत्र सादृश्यमूलकेषु अलङ्कारेषु उपमानपदार्थ:, उपमेयपदार्थ: ,उपमावाचकशब्द:,साधारणधर्मश्च भेदमूलकत्वेन, अभेदमूलकत्वेन, अध्यवसायत्वेन प्रकृतनिषिद्धत्वेन च वर्तते ।तथापि चमत्कारभेदो हि अलङ्कारभेदे निदानम्, इति कारणात् सर्वेषु स्थलेषु किमपि अन्यदेव चमत्कारत्वम्,अनुभूतिगम्यं भवति।सह्रदयह्रदय एव अत्र प्रमाणम्।शब्दार्थशरीरस्य काव्यस्य शोभाजनकत्वे सति कव्यात्मन: रसस्य उत्कर्षकत्वं नाम अलङ्कारत्वम् ,इति निश्चप्रचं भाति ।

अलङ्कारस्त्वाभरणं परिष्कारो विभूषणं,मण्डनञ्च।[15]

सन्दर्भितग्रन्थानां विवरणम् ---                    प्रकाशनम्

1- साहित्यदर्पण:, कविराजविश्वनाथकृत:, चौखम्बा सुरभारती प्रकाशन वाराणसी

2-कव्यप्रकाश:, आचार्य: मम्मट:, चौखम्बा संस्कृत संस्थान, वाराणसी

3-अमरकोष; श्रीमद् अमरसिंह:, चौखम्बा सुरभारती प्रकाशन वाराणसी

4- संस्कृत साहित्य का इतिहास श्री बलदेव उपाध्यायः, शारदा संस्कृत संस्थान वाराणसी

5- काव्यालङ्कारः, आचार्य भामहकृतः, चौखम्बा सुरभारती प्रकाशन वाराणसी

6– काव्यालङ्कारसूत्राणि, वामनः, चौखम्बा सुरभारती प्रकाशन वाराणसी

7- काव्यादर्शः, दण्डिना विरचितः, चौखम्बा सुरभारती प्रकाशन वाराणसी

8- ध्वन्यालोकः, श्रीमदानन्दवर्धनः, चौखम्बा सुरभारती प्रकाशन वाराणसी

( असिस्टेंट प्रोफ़ेसर साहित्य)
मुम्बादेवी आदर्श संस्कृत महाविद्यालयः मुम्बई

14 साहित्यदर्पण: द. परि. 51

15 अमरकोष: द्वि.101

# संस्कृतकाव्यशास्त्रेऽलङ्कारप्रस्थानम्

वीरेन्द्रकुमारतिवारी

अलं भूषणपर्याप्तिवारणेषु इति भ्वादिगणपठिताद् अल्धातोरम्प्रत्यये कृतेऽलमितिशब्दोऽ-मरकोषस्य रामाश्रम्यां व्युत्पादितः। अस्य व्युत्पत्तिलभ्योऽर्थो भूषणं वारणं पर्याप्तिश्च। अलम्पूर्वकात् कृधातोर्घञ्प्रत्यये कृतेऽलङ्कारशब्दो निष्पद्यते। एवमलङ्कारशब्दस्य मूले सौन्दर्यं सौन्दर्यस्य साधनं पर्याप्तिरूपा पूर्णता दोषवारणं चेत्यर्थाः सन्निहिताः सन्ति। घञ् यदि भावे मन्यते तदालङ्कारशब्दस्य सौन्दर्यमर्थः, यदा करणे मन्यते तदा अलङ्क्रियतेनेन इति व्युत्पत्त्यालङ्कारशब्दः सौन्दर्यसाधनेषु कटकादिषु काव्योपमादिषु च वर्तते। अयमाशयो वामनेन सौन्दर्यमलङ्कारः इत्यादिवचनेन प्रतिपादितः। कुन्तकेन अलङ्कारशब्दः शरीरस्य शोभातिशयकारित्वान्मुख्यतया कटकादिषु वर्तते। तत्कारित्वसामान्या-दुपचारादुपमादिषु, तद्वदेव गुणादिषु।

**अलङ्कारस्योद्गमः-**

अलङ्कारस्यापि मूलं वेद एव। ये ये अलङ्काराः पश्चान्निरूपितास्तेषां तेषां मूलं वैदिकवाङ्मये द्रष्टुं शक्यते।

''वावायाहि दर्शते मे सोमा अरङ्कृताः'' {ऋ.वे.1.2.1} इहारंकृतशब्दस्य,अञ्जनाभ्यञ्जने मानुषोऽलङ्कारः(शतपथे 13.8.4) इहालङ्कारशब्दस्य च प्रयोगः। ''कृत्वाऽलङ्कारमात्मनः''(वा.रा.2.40.13)इति रामायणे अलङ्कारशब्दस्य प्रयोगः, ''अलङ्कृतैःशुभैःशब्दैःसमयैर्दिव्यमानुषैः''(महाभारत.1.2.6)इहमहाभारतेऽलङ्कारशब्दस्य च प्रयोगः।निरूक्ते वेदे पश्चात् प्रयुज्यानस्य नशब्दस्योपमाबोधकत्वमभितम्।'उपमितं व्याघ्रादिभिः सामान्यप्रयोगे' उपमानानि सामान्यवचनैः,उपमानादाचरे,मयूरव्यंसकादयश्च' इत्यादीनि पाणिनीयसूत्राणि उपमारूपकादेःसत्तायां प्रमाणानि।पश्चात् व्याकरणमेवाश्रित्य उपमायाःश्रौत्यार्थीप्रभृतयो भेदाः कल्पिताः।ऋग्वेदे “सो चिन्नु न मराति वयं मरामरे”(1.191.10)इहानुप्रासः, ”शरासःकुशरासः” (1.191.3) इह

यमकम्,''स्वसुर्जारः श्रृणोति नः''(6.55.5) इह श्लेषः, जायेव पत्या उषती सुवासा उषा हस्त्रेव निरणीते अप्सः''(1.164.21)

**द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते।**
**तयोरन्यःपिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीते॥(**1.164.20)

इहातिशयोक्तिः,कथा ग्रामं न पश्यसि नत्वा भीरिव विन्दतीह (10.146.1) इहोत्प्रेक्षा, 'इन्द्र इव ह्युपस्तूयसे इन्द्र इव दस्युहा भव' (1.12.73) इहेन्द्रस्येन्द्रेणैव सादृश्यात् वर्णनाद् अनन्वय इत्यादयोऽलङ्कारविशेषाःद्रष्टुं शक्यन्ते।अथर्वेदे ''शन्नो देवारभिष्टये शन्नो भवन्तु पीतये'' इत्यत्र लाटानुप्रासःयजुर्वेदे 'यत्र बाणाःसम्पतन्ति कुमाराः विशिखाः इव'' (1.48) इत्यत्र बाणविशिखशब्दयोरेकार्थथयोः प्रयोगेणाऽऽपाततः पुनरूक्तेः प्रतीतेः पुनरूक्तवदाभासः, कठोपनिषदि'' आत्मानं रथिनं विद्धि''(1.3.3) इत्यादौ साङ्गरूपकम्। 'इन्द्रियेभ्यःपरा ह्यर्था अर्थेभ्यश्च परं मनः। मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान् परः' (14.3.10) इत्यत्र सालङ्कारश्च लभ्यते।यास्कस्य निरूक्ते उपमानस्य स्वरूपमुपमायाः केचन् कर्मोपमादयो भेदाताश्चैवं प्रतिपादिताः-अथात उपमा।

**अलङ्कारस्य विकासः-**

अलङ्कारशास्त्रस्य लभ्यमानेषु ग्रन्थेषु भरतमुनेर्नाट्यशास्त्रं प्रथमम्।तत्र नाट्ये प्रयोज्यानि भूषणाक्षसंघातादीनि,षट्त्रिंशल्लक्षणानि, आशीराक्रन्दकपटप्रभृतयः त्रयस्त्रिंशन्नाट्यालकृतयश्च प्रतिपादिताः। भूषणाक्षरसंघातौ शोभोदाहरणे तथा। षट्त्रिंशल्लक्षणान्येवं काव्यबन्धषु निर्दिशेत्।अत्र काव्यशब्दो नाट्यपरम्परायां लक्षणानि नाट्यालङ्कृतीश्च गुणालङ्कारयोरन्तर्भावं प्रतिपादयतः साहित्यदर्पणकारस्य विश्वनाथस्य ''एषां च लक्षणनाट्यालङ्काराणां सामान्यतः एकत्वेऽपि भेदेन व्यपदेशो गड्डलिकाप्रवाहेण। एषु च केषाञ्चित् गुणालङ्कारभावसन्ध्यङ्गविशेषान्तर्भावेऽपि नाटके प्रयत्नतःकर्तव्यत्वाद्विशेषोक्तिः (सा.द.परि.6)इति वचनेन प्रतीयते।भरतेन पुनः''उपमा रूपकं चैव दीपकं यमकं तथा।इत्युपमादयः स्पष्टतोऽलङ्कारशब्देनाभिहिताः।एवं नाट्यशास्त्रे चतुर्णामेवोल्लेखः।तत्रोपमारूपकदीपकानि सादृश्याभेदप्रधानानां पश्चात् विकसतामर्थालङ्काराणां यमकं च शब्दालङ्काराणां बीजान्युपलक्षणानि वा मन्तुं शक्यते।भरतादर्वाचीनैरालङ्कारिकैः पश्चाद् हेतु-संशय-दृष्टान्त-निदर्शन-गुणातिशयार्थात्तिलेशप्रभृतीनि लक्षणानितत्तन्नामभिरलङ्कारत्वेन स्वीकृतानि। भामहमारभ्यालङ्काराणां संख्या वर्धते।भामहस्य काव्यालङ्कारे 39 अलङ्काराः

स्वीकृताः,रसादयो रसवदालङ्कारत्वेनैव मताः। दण्डिनः काव्यादर्शे यमकादिशब्दा-लङ्कारेभ्योऽतिरिक्ताः 35 अर्थालङ्काराः निरूपिताः।उद्भटस्य काव्यालङ्कारसारसंग्रहे षट्सु वर्गेषु 41 अलङ्काराः प्रतिपादिताः। भोजेन श्रृङ्गारप्रकाशस्य दशमे प्रकाशे 72 अलङ्काराः कथिताः।तत्र ये शब्दमेव व्युत्पत्या भूषयन्ति ते शब्दालङ्काराः"इति लक्षणं विधाय जाति-गति-वृत्ति-रचना-घटना-मुद्रा-छाया-युक्ति-भणिति-पठिति-श्रव्यत्व-प्रेक्ष्यत्व-अभिनेयत्व-अध्येयत्व-वाकोवाक्य-प्रश्नोत्तरप्रहेलिका-गूढ-चित्तर-श्लेष-यमक-अनुप्रासरूपाः चतुर्विंशतिः शब्दालङ्काराः,"

"अर्थमेव ये व्युत्पत्त्या भूषयन्ति तेऽर्थालङ्काराः" इति लक्षणं निर्माय जाति-सूक्ष्म-सार-समाहित-भाव-विभावना-हेतु-अहेतु-सम्भव-विरोध-दृष्टान्त-व्यतिरेक-अन्योन्य-परिवृत्ति-मीलित-वितर्क-स्मरण-भ्रान्ति-उपमान-अनुमान-अर्थापत्ति-अ भाव-आगम-प्रत्यक्षरूपाः चतुर्विंशतिरर्थालङ्काराःनिगदिताः।"शब्दविशेषद्वारकोऽर्थविशेषो येषु प्रतीयते ते उभयालङ्काराः" इति लक्षणं कृत्वा उपमा-रूपक-साम्य-संशय-समाधि-समाशोक्ति-सहोक्ति-समुच्चय-तुल्ययोगिता-लेश-अपह्नुति-अप्रस्तुतप्रशंसा-भाविकादयश्चतुर्विंशतिः उभयालङ्काराश्च भोजेन निरूपिताः। ततो मम्मटः काव्यप्रकाशे अनुप्रास-यमक-पुनरूक्तवदाभास-वक्रोक्ति-चित्ररूपान् शब्दालङ्कारान् निरूप्योमाप्रभृतीन् एकषष्ट्यर्थालङ्कारान् निरूपितवान्। एवमप्ययदीक्षितेन अलङ्काराणां सख्या शताधिका जाता। पण्डिराजजगन्नाथेन सप्ततिरेवार्थालङ्काराः स्वीकृताः। नागेशभट्टेन काव्यप्रकाशनिरूपितेषु एकषष्टावेव अर्थालङ्कारेषु तदतिरिक्तानामलङ्काराणां यथासंभवमन्तर्भावः साधितः।

एवमर्थालङ्कारसंख्यास्वेव भूयान् विकासः काव्यशात्रे लक्ष्यते। शब्दालङ्कारास्तु पुनरूक्तवदाभास-अनुप्रास-यमक-श्लेष-भाषासम-वक्रोक्ति-चित्र-प्रहेलिकारूपेण परिगणिताः एव भेदा विकसिताः।तत्रापि चित्रप्रहेलिकयोः अलङ्कारत्वमेवध्वनिवादि-भिर्निरस्तम्। वस्तुतोऽर्थालङ्काराणामनन्ता भेदाः संम्भवन्ति। उक्तिवैचित्र्यरूपालङ्काराः भवन्ति।अत एव ध्वन्यालोके ध्वन्यभाववादिनां मतस्य प्रतिपादने ध्वनिकृतावाग्विकल्पानाम् आनन्त्येनालङ्काराणाम् आनन्त्यं सूचितम्। "मुखं चन्द्र इव" इत्यत्रोपमा,मुखं चन्द्रः इत्यत्र रूपकम्, "मुखं चन्द्रश्च प्रकाशते" इत्यत्र मुखचन्द्रयोः प्रस्तुतत्वे प्रकाशनरूपेणैकेन धर्मेण सम्बन्धात् तुल्ययोगितेत्यादि रूपेणोक्तिप्रकाराणां भेदेनाऽलङ्कारभेदः स्फुट एव।

काव्येषु रस-गुण-रीति-वृत्ति-ध्वनिप्रभृतयः सर्वे पदार्थाः अलङ्कारवाचका एव काव्यसौन्दर्यधायकत्वात्।एतदर्थमलङ्कार एव काव्यस्यात्मस्थानीयं तत्त्वमस्ति काव्यसौन्दर्यसम्पादकत्वात्। अलङ्कारवादिनः आचार्याः स्व स्व ग्रन्थे अलङ्कारतत्त्वस्य महत्त्वं प्रतिपादितवन्तः।तत्र आनन्दवर्धनाचार्येण स्वीये ध्वन्यालोकनाम्नि ग्रन्थे ध्वनिसिद्धान्तः प्रतिपादितः। तेन काव्ये अलङ्काराणामेकछत्रं साम्राज्यमपसार्य काव्यात्मा ध्वनिरिति मतं प्रतिपादितम्।परं कथमपि एतन्नैव वक्तुं शक्यते यत् तेन अलङ्काराणां महत्त्वं न्यूनीकृतम्।अलङ्काराणां लक्षणं तेनेत्थं कृतम्-

**तमर्थमवलम्बन्ते येऽङ्गिणं ते गुणाः स्मृताः।**
**अङ्गाश्रितास्त्वलङ्काराः मन्तव्याः कटकादिवत्॥**

आनन्दवर्धनमते यस्यालङ्कारस्य प्रयोगो रसाक्षिप्ततया क्रियते, अपि च यो विना पृथग् यत्नेन निष्पन्नो भवति स एवालङ्कारो ध्वनिकाव्ये अभिमतोऽस्ति। अलङ्काराः रसाभिव्यक्तौ उपयोगिनो भवन्ति। औचित्यानुरूपं यद्यलङ्काराणां योजना क्रियते तर्हि सर्वोप्यलङ्कारवर्गो ध्वनिरभिव्यक्तौ उपयोगी भवति।

काव्यमीमांसाकारेण राजशेखरेण सप्तमवेदाङ्गत्वेनालङ्कारः प्रतिष्ठापितः, यथा च तेनोक्तम्-उपकारकत्वात् अलङ्कारः सप्तमङ्गम्। इति यायावरीयः। ऋते च तत्स्वरूपपरिज्ञानाद् वेदार्थानवगतिः।अलङ्कारज्ञानेनैव काव्यस्योन्मीलनं भवति।

कुन्तकाचार्येण वक्रोक्तिजीविते काव्यस्वरूपनिर्धारणावसरे अलङ्काराणां महत्त्वं स्फुटीकृतम्-

**अलङ्कृतिरलङ्कार्यमपोद्धृत्य विवेच्यते।**
**तदुपायतया तत्त्वं सालङ्कारस्य काव्यता॥**

सालङ्कारस्य शब्दार्थयुगलस्य काव्यता भवतीति प्रतिपादयन् स काव्येष्वलङ्काराणां महत्त्वं स्वीकरोति।औचित्यसिद्धान्तस्य प्रतिष्ठापकाचार्यक्षेमेन्द्रस्य मते औचित्यमभिलक्ष्य कृतोऽलङ्कारप्रयोगः काव्ये महत् सौन्दर्यमुद्भावयति।

भोजराजेन काव्यशोभाकरत्वेन अलङ्कारा एव। अत एव भोजराजः त्रिविधमलङ्कारवर्गं स्वीकरोति।

त्रिविधः खल्वलङ्कारवर्गः वक्रोक्तिः, स्वभावोक्तिः, रसोक्तिरिति।तत्र उपमाद्यलङ्कारप्रधाने वक्रोक्तिः, श्लेषादिगुणप्राधान्ये स्वभावोक्तिः, विभावानुभावव्यभिचारिसंयोगात्तु रसनिष्पत्तौ रसोक्तिरिति।

अनेन परिलक्ष्यते यत् भोजराजः तानि सर्वाणि तत्त्वानि अलङ्कारपदवाचकानि स्वीकृतानि यैः काव्येषु सौन्दर्यस्यागमनं भवति। अनेन प्रतिभाति यत् भोजराजः अलङ्कारसिद्धान्तस्य पोषक एव।
मम्मटाचार्चः काव्यप्रकाशे वक्ति-

**उपकुर्वन्ति तं सन्तं येऽङ्गद्वारेण जातुचित्।**
**हारादिवदलङ्कारास्तेनुप्रासोपमादयः॥**

अर्थात् ये धर्माः अङ्गद्वारेण, अङ्गिनो रसस्याङ्गभूतौ शब्दार्थौ तद्वारेण तदुत्कर्षजननमुखेनाङ्गिनं रसं सन्तं जातुचित् कदाचित् न तु नियमेनेति यावदुपकुर्वन्ति,उत्कर्षयन्ति,ते धर्माः, अनुप्रासोपमादयोऽलङ्काराः। तत्र शब्दद्वारेण,अनुप्रासादयः, अर्थद्वारेण उपमादयः।

रसप्रस्थानपोषको विश्वनाथाचार्यः उत्कर्षहेतवः प्रोक्ताः गुणालङ्काररीतयः इति प्रतिपादयन् काव्यात्मभूतस्य रसस्योत्कर्षहेतुत्वेन काव्येऽलङ्काराणां महत्त्वं स्वीकरोति। साहित्यदर्पणस्य दशमपरिच्छेदे अलङ्कारान् विस्तरेण विवेचयति-

**शब्दार्थयोस्थिरा ये धर्माः शोभातिशायिनः।**
**रसादीनुपकुर्वन्तोऽलंकारास्तेऽङ्गदादिवत्॥**

यथा अङ्गदादयः शरीरशोभातिशायिनः शरीरिणमुपकुर्वन्ति, तथानुप्रासादयः शब्दार्थशोभातिशायिनो रसादेरूपकारकाः।

मम्मटोत्तरवर्तिषु काव्यशात्त्रीयाचार्येषु जयदेवस्य विशिष्टं स्थामस्ति। असावलङ्कारसिद्धान्तस्य पक्षपाती आचार्योऽस्तीति मन्यते। तन्मतेऽलङ्कारहितं शब्दार्थयुगलं तथैव अकाव्यत्वप्रयोजकं यथा उष्णतां विना अनलः अनलः नैव भवितुं शक्नोति। अर्थात् अलङ्कारराहित्ये सति काव्यताऽपि नैव भवितुं शक्नोति।

चन्द्रलोकनाम्नि ग्रन्थे तेनोक्तम्-

**अङ्गीकरोति यः काव्यं शब्दार्थावनलङ्कृतिः।**
**असौ न मन्यते कस्मादनुष्णमलङ्कृती॥**

उत्तरवर्तिकाले च विद्याधरेण एकावलीग्रन्थं, केशवमिश्रेण अलङ्कारशेखरं, अप्पयदीक्षितेन कुवलयानन्दं, विश्वेश्वरेण अलङ्कारकौस्तुभं, विरच्यालङ्कारसिद्धान्तः

सम्वर्धितः। आधुनिकसाहित्यशास्त्रे नैके प्रसिद्धाचार्याः अभवन् विराजन्ते च ये काव्येषु अलङ्कारतत्त्वस्य प्राधान्यं स्वीकुर्वन्ति। तेष्वाचार्येषु महामहोपाध्यायरेवाप्रसादद्विवेदिनः स्तम्भभूतास्सन्ति। तेषां मते अलङ्कार एव काव्यसर्वस्वमिति।यथा हि-

**अलं भावो ह्यलङ्कारः स च सौन्दर्यं तत्कृतोः।**
**विभक्तात्मा विभुर्जीवब्रह्मणोश्विद्धनो यथा॥**
**अलङ्कारोऽपि काव्यस्य तथा सौन्दर्यं तत्कृतोः।**
**अभिव्याप्य स्थितस्ताभिर्व्युत्पत्तिभिर्विभुः॥(का.ल.का.1)**

इत्थं साहित्यशास्त्रीयसिद्धान्तेषु अलङ्कारसिद्धान्तस्याऽपि महद्वैशिष्ट्यमित्यत्र न कापि विप्रतिपत्तिः सिद्धान्तेऽस्मिन्नलङ्कारस्य काव्यशोभां प्रति जनकत्वमङ्गीकृत्य, तस्यैव प्राधान्यं प्रतिपादितमस्ति। अलङ्कारपक्षाचार्या अलङ्कृतिरहितं काव्यं चमत्कारहीनमङ्गीकुर्वन्ति स्म। अत एव काव्यसर्वस्वमलङ्काराः इति दृढतया वक्तुं शक्यते।

**सम्बन्धग्रन्थसूची-**


1.काव्यप्रकाशः ८.१
2.साहित्यदर्पण १०-६
3.चन्द्रालोक
4.ऋङ्गारप्रकाश
5.ऋग्वेद १०
6.यजुर्वेद१.२.१
7.वाल्मीकीयरामायण२.४०.१३
8.महाभारत १.४.६
9.शतपथब्राहमण१३.८.४
10.काव्यालङ्कारकारिका १.१०
11.रसगङ्गाधर १
12.वक्रोक्तिजीवितम्
13औचित्यविचारचर्चा



(शोधच्छात्रः)

राष्ट्रियसंस्कृतसंस्थानम्, भोपालपरिसरः

# आधुनिकसंस्कृतसाहित्येऽलङ्कारवैविध्यम्
# (शारदामणिलीलाचरितमहाकाव्यस्य विशेषसन्दर्भे)

**विभूतिः**

**अलङ्काराणां स्वरूपं भेदाश्च-** 'अलम्' पूर्वकात् 'कृ' धातोः अलङ्क्रियते अनेन अलङ्करोति इति वा व्युत्पत्त्या करणे भावे वा घञ्-प्रत्ययेन **अलङ्कार** इति पदं निष्पद्यते। येन किमपि वस्तु अलङ्क्रियते, तत्सौन्दर्यं वा समृद्ध्यते सोऽलङ्कारः कथितः। यथा कटककुण्डलादीनि शरीरमलङ्कुर्वन्ति तथा अनुप्रासोपमादयोऽलङ्कारा अपि शब्दार्थशरीरं काव्यमलङ्कुर्वन्ति। सौन्दर्यमेवालङ्कारः। न केवलं काव्यशास्त्रिणोऽपितु साधारणो मानवोऽपि निःसर्गतः सौन्दर्यानुरागी भवति। केवलं मनुष्य एव न अपितु स्रष्टापि विविधवर्णविभूषितां प्रकृतिं निर्माय स्वसौन्दर्यानुरागं प्रकटयति। खगानां कीटपतङ्गानां पुष्पपल्लवादीनामनेकविध- लोचनानन्दकराः रागाः विधातुरलङ्कार प्रेमप्रकटनायालम्। काव्यलक्षणेषु अलङ्कारः मुख्याङ्गरूपेण स्वीक्रियते। भरतमुनिना दृश्यकाव्यलक्षणेषु **"मृदुललितपदाढ्यम्"**[1] इति विशेषणं निर्दिष्टम्। यत् श्रव्यकाव्यस्य कृते अपि प्रासङ्गिकं वर्तते। अलङ्कारसम्प्रदायस्य प्रवर्तकः भामहः महाकाव्यस्य लक्षणे एव स्पष्टरूपेण सालंकारशब्दस्य प्रयोगं करोति। जयदेव-रूद्रट-उद्भटादयोऽपि इममेव सम्प्रदायमनुसरन्ति। तदाहुः -

- **न कान्तमपि निर्भूषं विभाति वनिताननम्।**
- **अनेन वागर्थविदामलङ्कृता विभाति नारीव विदग्धमण्डना - भामहः।**
- **असौ न मन्यते कस्मादनुष्णमनलङ्कृती - जयदेवः।**

[1]नाट्यशास्त्रम् 16/28

महाकविदण्डिरपि **'काव्यशोभाकरान् धर्मानलङ्कारान् प्रचक्षते'** [1] इत्युक्त्वा काव्यशोभायै अलङ्काराणां महत्तां स्वीकरोति। आचार्यवामनस्तु काव्यग्राह्यता अलङ्काराणामाधारेणैव निर्धारयति।[2] अग्निपुराणकारोऽपि **'काव्यं स्फुटालंकारः'** इति निर्दिश्य काव्यस्य कृते अलङ्काराणाम् अनिवार्यतां स्वीकरोति। [3] कुन्तकस्य वक्रोक्तिव्यापारे एव सर्वेऽलंकाराः अन्तर्निहिताः सन्ति –

**यत्रालंकारवर्गोऽसौ सर्वोऽप्यन्तर्भविष्यति**[4]

भोजोऽपि **'काव्यमलंकारैरलङ्कृतम्'** इति प्रतिपाद्य काव्यस्य शोभाधायकतत्त्वेषु अलङ्काराणाम् अद्वितीयं स्थानं स्वीकरोति।[5] आचार्यमम्मटः **'अनलङ्कृती पुनः क्वापि'** इति कारिकायाः वृत्तौ प्रतिपादयति **'सर्वत्र सालङ्कारौ क्वचित्तु स्फुटालङ्कारविरहत्वेऽपि न काव्यत्वहानिः'** अनेन स्पष्टं भवति यत् मम्मटः यथासम्भवं काव्ये अलङ्काराणां उपस्थितिं मनुते। [6] आचार्यानन्दवर्धनानुसारं न तु चारुत्वमलङ्कारः अपितु चारुत्वहेतुः अलङ्कारः। [7] आचार्यमहिमभट्टः वाणीभङ्गिमामलङ्कारं स्वीकरोति-

**"भङ्गिभणिति भेदानामेवालंकारत्वोपगमात्"** (व्य.वि.पृ.397)

त्रिविधा अलङ्काराः सन्ति।

1. **शब्दालङ्काराः ।**
2. **अर्थालङ्काराः ।**
3. **उभयालङ्काराश्च ।**

---

[1]काव्यादर्शः 2.1

[2]काव्यालंकारसूत्रवृत्तिः 1.1.1

[3]अग्निपुराणम् 337/7

[4]वक्रोक्तिकाव्यजीवितम् 1.20

[5]सरस्वतीकण्ठाभरणम् 1.2

[6]काव्यप्रकाशः 1.4

[7]हि चारुत्वहेतुः प्रसिद्धिः (ध्वन्यालोक पृ. 39)

केचन काव्यशास्त्रिणः शब्दालङ्काराणां चत्वारः अथवा षट् भेदाः मन्वते। किन्तु विश्वेश्वरकविचन्द्रः एतेषां संख्या एकादश स्वीकरोति।आचार्यमम्मटानुसारं शब्दालङ्काराणां संख्या षडेव वर्तते**वक्रोक्तिरनुप्रासो यमकं श्लेषचित्रके।**

**पुनरुक्तवदाभासो शब्दालङ्कृतयस्तु षट्।।**[8]अर्थालङ्काराणामपि वर्गीकरणं विद्यते। आचार्यरूद्रटः **काव्यालङ्कारनामके** ग्रन्थे अर्थालङ्काराणां चतुरः वर्गान् स्वीकरोति ते प्रतिपादयन्ति यत् अलङ्काराणां चत्वारः आधाराः भवितुं शक्यन्ते - 1. औपम्यम् 2. वास्तवम् 3. अतिशयः 4. श्लेषः।

**अलङ्काराणां महत्त्वम् -**

वस्तुतः अलङ्काराणां काव्येषु किं महत्त्वम् ? अस्मिन् विषये संस्कृतकाव्यशास्त्रिणां मतद्वयं प्राप्यते। केषाञ्चित् मते अलङ्कारः काव्येषु अपरिहार्यतत्त्वं वर्तते। केचन आचार्याणां मते सौन्दर्यमात्रमलङ्कारः अर्थात् काव्ये एतेषामभावे न काव्यत्वहानिः इति। यथा एका सौन्दर्यानारी आभूषणानामभावेऽपि स्वरूपादिभिः अन्येषां चित्तमाकर्षति तथैव गुणैः समन्विता मनोहारिणी कवितापि सहृदयानां हृदयमावर्जयति। वस्तुतः एते उभेऽपि पक्षे स्वसीमानमतिक्रामतः। काव्ये अलङ्काराणां बहुलता सौन्दर्यस्यापकर्षका भवति। अलङ्काराणां समुचितः सार्थकश्च प्रयोगः एव कवेः महनीयं कवित्वं विद्यते। सरसकाव्येऽलङ्काराणां प्रयोगस्तु सौन्दर्याधायको भवति। परं नीरसे काव्ये अलङ्काराणां प्रयोगः उक्तिवैचित्र्यमात्रमेव विद्यते। उक्तमपि **- यत्र तु नास्ति रसः (अलंकाराः) उक्तिवैचित्र्यमात्रपर्यवसायिनः ।**[9]

काव्येषु विषयमेव स्पष्टीकरणाय अलङ्काराणां योजना क्रियते। अलङ्कारस्तु एतादृशी श्रृङ्खला विद्यते या अनन्तं, सान्तं विदधाति। अलौकिकम् लौकिकम्, लौकिकञ्च अलौकिकम् करोति।अलङ्काराः नीरसं काव्यं सरसं कुर्वन्ति। गतेः संचारं कुर्वन्ति, स्पन्दनं स्फूर्तिञ्च पूरयन्ति। अलङ्काराः सौन्दर्यस्याभिवर्द्धकाः भवन्ति। काव्ये एतेषां प्रयोगः भावानां रमणीयतायै भवति। येन अभिव्यक्तिः रमणीया भवति। यश्च कविः अलङ्काराणां प्रयोगे सिद्धहस्तः, तस्य काव्ये अनायासेनैव अलङ्काराः स्फुटाः भवन्ति। काव्येषु अलङ्काराणां महत्त्वपरिप्रेक्ष्ये आचार्यकुन्तकः प्रतिपादयति । धर्मार्थसाधनरूपकाव्ये आह्लादकतायाः महत्त्वपूर्णं तत्त्वमलङ्कारो विद्यते-

[8]काव्यप्रकाशः 30-9, भूमिका

[9]काव्यप्रकाशः पृ. 285

**धर्मादिसाधनोपायः सुकुमारक्रमोदितः।काव्यबन्धोऽभिजातानां हृदयाह्लादकारकः।।**[10]

अलङ्कारस्तु तादृक्साधनं वर्तते, येन माध्यमेन कटुवचनान्यपि वाक्यानि सहृदयैः ग्राह्याणि भवन्ति -

**व्यवहारपरिस्पन्दसौन्दर्यं व्यवहारिभिः।**
**सत्काव्याधिगमादेव नूतनौचित्यमाप्यते।।**[11]

अलङ्कारैः काव्येषु एतादृशः चमत्कारोऽत्पद्यते, यः चतुर्वर्गफलप्राप्तेरनन्तरमपि न प्राप्यते। सत्यमेव काव्येष्वमृतं पूरयन्ति अलङ्काराः -

**चतुर्वर्गफलास्वादमप्यतिक्रम्य तद्विदाम्।**
**काव्यामृतरसेनान्तश्चमत्कारो वितन्यते।।**[12]

वस्तुतः अलङ्काराः एव अलंकृतिरलंकार्ययोः विभेदकाः भवन्ति ।अलङ्कारैः काव्यं सहजमाहार्यञ्च भवति। काव्येषु नूतनता समागच्छति। लोकातिक्रान्तगोचरतायाः दर्शनं भवति। अलङ्काराणां एतावद् महद्महत्त्वं दृष्टिमादाय, तथा च काव्ये चारूत्वसम्पादनाय पं. बालकृष्णमहोदयेन स्वग्रन्थे शारदामणिलीलाचरितमहाकाव्ये यथासम्भवम् अनायासेन च अलङ्काराः सम्प्रयुक्ताः। अस्मिन् महाकाव्ये कवेः अलङ्कारयोजना स्वाभाविकरूपेण विद्यते। अलङ्कारप्रयोगे कविः बालकृष्णः कालिदासेन प्रभावितः दरीदृश्यते। यतो हि यथा कालिदासः उपमाप्रियः विद्यते तथैव कविबालकृष्णोऽपि स्वमहाकाव्ये उपमालङ्कारस्य सर्वाधिक्येन प्रयोगं करोति। यद्यपि महाकाव्ये विरोध-उदात्त-रूपक-यमक-अर्थान्तरन्यास-निदर्शना-इत्यादीनामलङ्काराणामपि योजना वर्तते परं न तथा एतेषां प्रयोगः वर्तते यथा उपमालङ्कास्य। कविना प्रयुक्तानामलङ्काराणां सर्वाधिकक्रमेणैव अत्र विवेचनं क्रियते।

**शारदामणिलीलाचरितमहाकाव्ये प्रयुक्तालङ्काराः -**

**उपमा -** वैदिककालादेव उपमालङ्कारस्य प्रयोगः दृश्यते। वेदेषु-उपमा-रूपक-अतिशयोक्ति-अलङ्काराः प्राचुर्येणोपलभ्यन्ते।

---

[10]तत्रैव 1.2

[11]तत्रैव 1.4

[12]तत्रैव 1.5

नाट्यशास्त्रे भरतमुनिना येषां चतुर्णाम् अलङ्काराणां वर्णनं क्रियते, तेषु उपमालङ्कारः अन्यतमो विद्यते।आचार्यमम्मटः अर्थालङ्कारेषु सर्वप्रथमं उपमालङ्कारस्यैव लक्षणं प्रतिपादयति- **साधर्म्यमुपमा भेदे**[13] बहुभिः आचार्यैः व्याख्यातं उपमालङ्कारं पण्डितबालकृष्णमहोदयेन स्वमहाकाव्ये प्रमुखं स्थानं प्रदत्तम्। तत्र महाकाव्ये प्रतिद्वितीयपद्यं उपमालङ्कारेण अलङ्कृतं दृश्यते-

**पदे पदे देवागृहैः पवित्रैःश्रद्धाप्रतीकैः शिवशक्तिमुख्यैः।**

**हारान्तराले तरलो व हैमो महार्घरत्नैर्जटितो विभाति।।**[14]

शारदामातुः ग्रामः तथैव सुशोभते यथा बहुरत्नयुक्तकण्ठाभरणे सुवर्णो सुशोभते। अत्यन्तसुशोभितगृहैः भवनैः प्रकाशमानदीपैः, रम्योपशल्यैः समन्वितोऽयं ग्रामः भूम्यां तथैव विराजते यथा तारागण मध्ये प्रमुखं तारकं चन्द्रमा विराजते।

**इहास्ति वंशो द्विजपुंगवानाम् नाम्ना मुखर्जीतिविगीतकीर्तिः।**
**गंगाझरो वोच्चभुवः सकाशात् सूतोऽभिपूतो निजपुण्यधाम्ना।।**[15]

**उत्प्रेक्षालंकारः-**उत्प्रेक्षालंकारः सादृश्यमूलको अभेदप्रधानालंकारो वर्तते। अस्मिन् उपमानोपमेययोः अभेदस्य सम्भावनया काव्ये विचित्रसौन्दर्यं दरीदृश्यते। अस्मिन् शारदामणिलीलाचरितमहाकाव्ये कविना प्रयुक्तोऽयमलङ्कारः कैश्चिद् उदाहरणैः अत्र प्रस्तूयते-

**स्रोतोवहाऽमोदरनामभाजासदा सुनीरा भ्रमिभिर्वहन्ती।**
**दया विधातुर्द्रवतां गतेवव्रीहिप्रदेशान् परिषिञ्चतीह।।**[16]

**भवेदयं रामपदाब्जभक्तोलोकत लोकेष्वथ राममेव।**
**इतीव रामस्य चकार नाम्नापिता तनूजं किल रामचन्द्रम्।।**[17]

**अर्थान्तरन्यासालङ्कारः -**

**तथापि सेवां कुरुते स्म नित्यम् अनन्यभक्त्या श्रमखेदशून्या।**
**अपि प्रपन्ना विषमां विपत्तिंत्यजन्ति धैर्यं न कदाऽपि धीराः।।**[18]

---

[13]काव्यप्रकाशः 10.1

[14]शारदामणिलीला. 1.26

[15]शारदामणिलीला. 1.15

[16]शारदामणिः 1.10

[17]तत्रैव 1.18

सा शारदा अनन्यभक्त्या श्रमखेदशून्या च पत्युः सेवां करोति स्म। सत्यमस्ति - **ये धीराः भवन्ति, ते कदापि विषमविपत्तौ अपि धैर्यं न त्यजन्ति।** एवमत्र विशेषस्य सामान्येन समर्थनं क्रियते।

**शनकैर्ववृधे रुजा तथा भययुक्ता मठवासिनोऽभवन्।**
**तरूमूलते क्षयं तदा ग्लपनं यान्ति शिफादलान्यपि।।**

अस्मिन् महाकाव्ये शतशः अर्थान्तरन्यासस्योदाहरणानि विद्यन्ते। एव अयमलङ्कारः काव्ये द्वितीयस्थानं भजति।

**यमकालङ्कारः**-संस्कृतकाव्यशास्त्रे यमकालङ्कारस्य कल्पना अतीव प्राचीना वर्तते। भरतमुनिः संस्कृतकाव्यशास्त्रस्यालङ्कारपरम्परायां येषां चतुर्णामलङ्काराणां वर्णनमकरोत् तेष्वेको यमकालङ्कारोऽपि विद्यते। उदाहरणानि यथा -

**व्योम्नीव भानुः कमलेव धाता यथा निशायामधिपो निशायाः।**
**तथोदियायाऽत्र हरिप्रसादोहरेः प्रसादो नु शरीरधारी।।**[19]

उभयोरपि हरिशब्दयोः अर्थः भिन्नः अस्ति। एकस्य हरिप्रसादनामको जनः, द्वितीयस्य हरेः (विष्णोः) प्रसादः (मूर्तिमान् रुपः)। एवमत्रापि यमकालङ्कारो विद्यते।

**भार्या भवस्याऽपि भवप्रसूति र्जीवस्य जीवातुरथाऽन्तकापि।**
**सौम्यापि रौद्राऽसि शिवाऽपि भीमात्वामाश्रये त्वामवबोद्धुमम्ब।।**[20]

पद्येऽस्मिन् भवशब्दः द्विवारं प्रयुक्तम्, द्वयोरर्थः भिन्न एव। एकस्य शिवोऽर्थः द्वितीयस्य भवः अर्थात् जगत्। अतः श्लोकेऽस्मिन् यमकालङ्कारो विद्यते।

**रूपकांलकारः** -शारदामणिलीलाचरितमहाकाव्ये साङ्गरूपकस्य इदमुदाहरणं द्रष्टव्यम्-

**किञ्जल्का नखरा यस्य संवर्तिकाऽगुंलीगणः।**
**मध्यमो रागसम्भारः पार्ष्णिभागो वराटकः।।**[21]

---

[18]शारदामणि. 3.28

[19]शारदामणि. 1.31

[20]शारदामणि. 11.23

[21]शारदामणि. 11.33

रामकृष्णपरमहंसस्य नखेषु किञ्जल्कानाम्, अङ्गलिषु नवपल्लवानाम्, पादस्य मध्यभागे रागसम्भारस्य, पादस्य तले बीजकोषस्यारोपः विद्यते। अतः इदं साङ्गरूपकस्य उदाहरणं वर्तते।

**सा मर्दयन्ती चरणौ तदीयौपप्रच्छ ते मे कतमोऽस्ति गन्धः।**
**त्वं मे प्रसूस्त्वं भवतारिणी सा देवालये यां सततं गृणामि।।[22]**

शारदायां भवतारिणीदुर्गायाः आरोपवशादत्र रूपकालङ्कारः विद्यते।

**श्लेषालङ्कारः -**श्लेषालङ्कारः शब्दालङ्कारो विद्यते। उदाहरणानि यथा -

**सा शारदा स्यान्मम सारदात्रीशब्दार्थयोर्यास्ति महाकवीनाम्।**
**मातेव बालस्य पदश्च्युतीनांनिभालयित्री सुतरां दयालुः।।[23]**

अत्र 'पद' इति पदेन, चरणौ श्लोकपदानि च 'बाल'पदेन बालकः कवि बालकृष्णश्च, शारदापदेन सरस्वती शारदामाता च एते अर्थाः गृहीताः। एवमत्र एकेन पदेन द्वौ अर्थौ निष्पद्येते।

**अनुप्रासालङ्कारः-** भारतीयसाहित्यस्य कोशानुसारम् अनुप्रासालङ्कारः काव्ये वर्णसंगीतं नादसौन्दर्यञ्च विदधाति। अनुप्रासालङ्कारस्याधारः वर्णसाम्यम्, व्यञ्जनाञ्चावृत्तिः अस्ति।स्वरेषु वैषम्येऽपि शब्दसाम्यमनुप्रासः भवति आचार्येण अस्यालङ्कारस्य पञ्चभेदाः स्वीकृताः ।शारदामणिलीलाचरितमहाकाव्ये एतेषां पञ्चानामेव प्रयोगः संलक्ष्यते। सामान्यलक्षणमाधारेण उदाहरणानि अत्र प्रस्तूयन्ते-

**बालैर्यदा खेलति सा स्म बाला पित्रोस्तदा नन्दयति स्म चित्तम्।**
**तस्याः प्रसादेन तयोः प्रसादोहासेन हासः सह जृम्भते स्म।।[24]**

श्लोकेऽस्मिन् 'ब' वर्णस्यावृत्त्या छेकानुप्रासः, प्रसादेन प्रसादः, हासेन हासः, इत्यनयोः शब्दयोः लाटानुप्रासः विद्यते।

**विरोधालङ्कारः -**

**तत्रस्थनागं परिहर्तुकामःश्रीरामकृष्णस्त्वरया प्रपेदे।**
**रुजागृहीतः शयनं गतश्चस धावमानः कुतुकं न कस्य।।[25]**

---

[22]शारदामणि. 3.7

[23]शारदामणि. 1.1

[24]शारदामणि. 2.1

[25]शारदामणि 4.33

दूरस्थस्य अप्रत्यक्षस्य ज्ञानं नेत्राभ्यां लोके न सम्भाव्यते। तथापि अत्र वर्णनं क्रियते यत् रुजागृहीतः, शयनं गतश्च श्रीरामकृष्णः तत्रारामे नागं परिहर्तुम् गतः इति अत्र विरोधाभासः। अस्य परिहारः एवं भवितुं शक्यते यत् ये महापुरुषाः भवन्ति तेषां दिव्यदृष्टिः सञ्जायते येन अप्रत्यक्षवस्तुनः अपि ज्ञानं भवति। अत्र विरोधालङ्कारः दृश्यते।

एवमनुशीलनेन ज्ञायते यत् महाकाव्येऽस्मिन् अलङ्काराणां बाहुल्यं वर्तते। अलङ्कारैः महाकाव्यमिदमतितरं सुशोभते। अनायासेन प्रयुक्तालङ्काराः काव्ये चमत्कृतिमानयन्ति। रसाः **हारादिवदलङ्कारास्तेऽनुप्रासोपमादयः** कथनमिदं महाकाव्ये चरितार्थं भवति।

**सन्दर्भग्रन्थाः**

काव्यप्रकाशः
साहित्यदर्पणः
वक्रोक्तिजीवितम्
काव्यालङ्कारः
नाट्यशास्त्रम्
काव्यादर्शः
सरस्वतीकण्ठाभरणम्
शारदामणिलीलाचरितम्

**शोधकर्त्री**

**राष्ट्रियसंस्कृतसंस्थानम् भोपालम् म.प्र.**

# "संस्कृत साहित्य में वृक्षारोपण संरक्षण"

**डॉ.मांगीलालः**

है कि **"पेड़ नहीं, पृथ्वी के वंशज हैं, फूल लिये फल लिये मानव के अग्रज हैं।"**हमारे पौराणिक आख्यानों में रसोई के लिए लकड़ी बीनकर लाने का उल्लेख तो हमें प्राप्त होता हैं किन्तु कहीं भी लकड़ी को काटकर लाने का उल्लेख नही मिलता है । जिस प्रकार समुद्रमंथन में अमृत तथा विष दोनों निकले लेकिन शिवजी ने लोककल्याण के लिए विष पी लिया और नीलकंठ हो गये साथ ही अमृत दूसरों को दे दिया वृक्ष भी तो यहीं कार्य प्राचीनकाल से कर रहें हैं।

संस्कृत साहित्य में हमें 18 पुराणों का वर्णन प्राप्त होता हैं। अग्निपुराण के 70वें अध्याय में पेड़ों के विषय में विशेष चर्चा है । वराहमिहिर कृत बृहत्संहिता में भी वृक्षायुर्वेद का विस्तृत वर्णन मिलता है । 8वीं शताब्दी का कृषि पराशर ग्रन्थ भी मूलतः कृषिविज्ञान का एक प्रासंगिक ग्रन्थ है। इसमें वृक्षों का संरक्षण व बीजों के रखरखाव के बारे में विस्तृत वर्णन है। शुक्राचार्य कृत शुक्रनीति तथा तत्त्वरत्नाकर में उद्यानवानिकी तथा वृक्षायुर्वेद पर दो अध्याय मिलते हैं । ऋषि जहाँ निवास करते है उस स्थान को तपोवन कहा गया है । तपोवन में तपस्या के साथ वन जुड़ा हुआ है अर्थात् वन है तो तपस्या है । वृक्ष के अलावा संसार में ऐसा कोई नहीं है जो निरन्तर इस धरा को बसाए रखने का उत्सर्ग करता है ।ऋषियों का मत है कि यह सम्पूर्ण सृष्टि पेड़ों से ही जन्मी है । ऋग्वेद कहता है कि –

**"किं स्विद्वनं क उ स वृक्ष आस, यतो द्वा पृथिवी निष्टतक्षुः।"**[1]

(अर्थात्- वह कैसा वन रहा होगा और वे कौन से वृक्ष रहे होंगे, जिनसे काठ से लेकर तराश कर परमेश्वर ने यह धरती और आकाश बना डाले।)

हमारें ऋषिमुनियों को लगता था कि पेड़हमारे पूर्वज् है, तथा यह सृष्टि उनसे ही जन्मी है। कार्ल सेगन ने अपनी पुस्तक **सृष्टि का इतिहास(History Of Cosmos)** में कहा है कि यह वृक्ष या देवदारु मेरा भाई है क्योंकि मनुष्य और इस वृक्ष के जीन्स मूलतः एक ही है।

[1]. ऋग्वेद 10.81.8

ऋषि पेड़ों को पूजनीय मानते है क्योंकि उनमें देवों का वास होता हैं । यजुर्वेद के 16वें अध्याय में ऋषि कहते हैं कि –

**नमो वृक्षेभ्यः। वृक्षाणां पतये नमः। ओषधानां पतये मनः। मनो वन्याय। मनो पर्णायः।**

अथर्ववेद के में वृक्षों के तीन रूप बतलाये गये है वनस्पति, औषध तथा वीरूत्। यहाँ पर वनस्पति पूर्ण वृक्ष है, औषधियाँ जड़ी बूटियाँ और वीरूत् लताएँ हैं। ऋग्वेद में कहा गया है कि

**" मा काकम्बीरमुद्वहो वनस्पतिमशस्तीर्वि हि नीनशः"** ।

(अर्थात्- पौधों को क्षति मत पहुँचाओ, वनस्पतियों का विनाश मत करों।)

ऋषियों के मत में यह धरा विश्वरूपा व माता है पृथ्वीसूक्त में कहा गया है कि " **माता भूमिः पुत्रोऽहं पृथिव्याः**"(अर्थात् यह धरती माँ है और हम सब इसके पुत्र हैं ।)मुनि को मुनि इसलिए कहते है क्योंकि वह मनन कर सकता है । मननशील विचारकों में एक आचार्य मनु हुए ते जिन्होंने मनुस्मृति की रचना की थी । उसी मनु ने वृक्षों में निहित चेतना को पहचाना और कहा कि –

**तमसा बहुरूपेण वेष्टिता कर्महेतुना।**
**अन्तःसंज्ञा भवन्त्येते सुखदुःखसमन्विताः।।**[2]

(अर्थात् - कर्म के कारण बहुरूपी अँधेरे से घिरे वृक्ष अंतःसंज्ञ या अपने भीतर की चेतना से युक्त होते हैं तथा सुखदुःख का अनुभव करते हैं।)

आचार्य चरक तो बहुत अच्छे वैज्ञानिक थे व्यास और मनु ने पेड़ों के बारे में जो कहा उसे उन्होंने अपने तर्क से प्रमाणित किया और कहा कि " कुछ पेड़ जो सूर्यके लिये भक्ति रखते हैं, वे सूर्य के घूमने के साथ घूमते चलते हैं ।" जैसे –

**"वृक्षादीनां चेतनत्वं बोद्धव्यं तथाहि सूर्यभक्त्या सूर्यदिक्यारिभ्रमणेन"।** [3]

भागवत पुराण में वृक्षों को विराटपुरूष का स्वरूप बतलाया गया है कि सागर उसकी कोख है, पहाड़ उसकी हड्डियों का ढाँचा, हवा उसकी साँस है नदियाँ उसकी धमनियाँ हैं ।

**कुक्षिः समुद्रा गिरयोऽस्थिसङ्घा, नद्योऽस्य नाड्योऽथ तनूरुहाणि।**
**महीरुहा विश्वतनोर्नरेन्द्र अनन्तवीर्यः श्वसितं मातरिश्वा, गतिर्वयः कर्मगुणप्रवाहः।**

ऋषियों ने विश्व को ही एक पेड़ के रूप में माना है। ऋग्वेद में कहा गया है कि -

**द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषष्वजाथे।**

---

[2].मनुस्मृति 1.49

[3]मनुस्मृति

**तयोरन्यःपिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति।।**[4]

(अर्थात् - संसार में अश्वत्थ वृक्ष पर जीव और आत्मा के दो पंछी बैठे हैं, उसमें से पहला तो स्वादिष्ट पिपल के फल खा रहा है, और दूसरा कुछ न खाकर केवल देख रहा है ।)पुराणकारों ने यह भी कहा कि यदि मूर्ति न मिले तो विष्णुरूपी अश्वत्थ की या वटरूपी शिव की पूजा कर लें।

**मूर्त्यभावे पूजनीयोऽश्वत्थो वा वटोऽथवा।**
**अश्वत्थरूपी विष्णुः स्याद् वटरूपी शिवो यतः।।**[5]

पुराणकारों ने वृक्षारोपण करने को स्वर्ग गमन का रास्ता माना है जैसे –

**अश्वत्थमेकं पिचुमन्दमेकं, न्यग्रोधमेकं दशपुष्पजाति।**
**द्वे द्वे तथा दाडिममातुलुङ्गे, पञ्चाम्रवापी नरकं न याति।।**

(अर्थात् – एक अश्वत्थ या पीपल, एक न्यग्रोध, एक वट, दस पुष्पवाले वृक्ष, दो दो अनार तथा नारंगी के पेड़ लगाने वाला कभी नरक में नहीं पड़ता है ।)

पद्मपुराण में निःसंतान मानव को पेड़को ही उसकी संतान बतलाया गया है तथा कहा गया है कि एक पीपल का वृक्ष हजारपुत्रों के समान हैं।

**" अपुत्रस्य च पुत्रत्वं पादपा इह कुर्वते "**
**यत्नेनापि हि राजेन्द्राश्वत्थारोपणं कुरु।**
**स ते पुत्रसहस्राणां कार्यमेकः करिष्यति।।**[6]

याज्ञवल्क्य एक महान चिन्तक हुए थे उन्होंने बृहदारण्यकोपनिषद् में मनुष्य और पेड़ की तुलना निम्नरूप में व्यक्त की है कि - जिस प्रकार पेड़ की छाल होती है वैसे ही मानव की त्वचा, धमनियों में जैसे रक्त का संचार होता है वैसे ही पेड़ों में भी रक्त का संचार होता है ।[7]मनुष्य का यह भौतिक शरीर पञ्च महाभूतों (पृथ्वी,जल, अग्नि, वायु,आकाश) आदि से बना हुआ है तथा मनुष्य अपनी पञ्चतन्मात्राओं (शब्द, स्पर्श, रूप, रस, गंध) आदि से ही अनुभव करता है । हमारे धर्मशास्त्रकारों ने श्मशान, मंदिरों, उद्यानों तथा बावड़ियों के समीप के वृक्षों को काटना वर्जित बतलाया है । महाभारत की विदुरनीति बहुत ही प्रसिद्ध है जिसमें वृक्षों के सम्बन्ध में उल्लेख है कि –

---

[4].ऋग्वेद

[5].स्कन्दपुराण वैष्णवखण्ड 4.3.38

[6]पद्मपुराण सृष्टिखण्ड अध्याय 36

[7].बृदारण्यकोपनिषद् 3.9.28

**धार्तराष्ट्रा वनं राजन् व्याघ्राः पाण्डुसुता मताः।**
**मा वनं छिन्दि सव्याघ्राः मा व्याघ्रान् नीनशो वनात्।।**
**न स्याद्धनमृते व्याघ्रान् व्याघ्रा न स्युर्ऋृते नवम्।**
**वनं हि रक्ष्यते व्याघ्रैव्याघ्रान् रक्षति काननम्।।**[8]

(अर्थात् - हे! राजन् आपके बेटे वन हैं, पांडु के बेटे व्याघ्र । वन को भी बटा रहने दीजिए और व्याघ्रों को भी। व्याघ्र नहीं रहेंगे, तो वन भी नहीं रहेगा और वन नहीं रहेगा तो व्याघ्र नहीं रहेंगे। व्याघ्रों से वन बचा रहता है, वन से व्याघ्र बचे रहते हैं।)

आचार्य भरतमुनि ने 36 अध्यायों का नाट्यशास्त्र लिखा है और रस के प्रतिष्ठित आचार्य है उन्होंने भी नाट्यशास्त्र में लिखा है कि -

**यथा बीजाद् भवेद् वृक्षो वृक्षात् पुष्पं फलं तथा।**
**एव मूलं रसाः सर्वे तेभ्यो भावा व्यवस्थिताः।।**[9]

जर्मनी के प्रख्यात दार्शनिक विचारक हर्डेल **(1744-1803)** ने मानव सभ्यता का विकास पेड़ों के द्वारा ही समझाते हुए कहा है कि वृक्ष प्राच्य देशों में उगा, इसका तना रोम तक पहुँचा, जिससे अगणित शाखाएँ और पत्तियाँ फूटती रहीं।[10] वैसे तो सभी वृक्ष छाया देकर उपकार करते हैं संस्कृत साहित्य के विद्वान् कालिदास ने अपनी रचनाओं में भी वृक्षों का अत्यधिक वर्णन किया है। कालिदास ने मेघदुत में छाया का अर्थ आश्रय से माना है जैसे –

**यक्षश्चक्रे जनकतनयास्नानपुण्योदकेषु।**
**स्निग्धच्छायातरुषु वसतिं रामगिर्याश्रमेषु।।**

कालिदास ने अपनी विश्व प्रसिद्ध रचना अभिज्ञानशाकुंतलं के मंगलाचरण में भगवान शिव की (अष्टमूर्ति) स्तुति प्रकृति प्रेम के रूप में बतलाया है–

**या सृष्टिः स्रष्टुराद्या वहतिहुतं या हविर्या च होत्री।**
**ये द्वे कालं विधत्तःश्रु तिविषयगुणा या स्थिता व्याप्य विश्वम्।।**
**यामाहुः सर्वबीज प्रकृतिरिति यया प्राणिनः प्राणवन्तः।**
**प्रत्यक्षाभिःप्रपन्नस्तनुभिरवतु वस्ताभिरिष्टाभिरिशः।।**[11]

---

[8].महाभारत, 5.37.41-42

[9].नाट्यशास्त्र 6.38

[10] India and Europe- page 69-70

[11].अभिज्ञानशाकुन्तलं 1.1

प्रकृति से सम्बन्धित जब शकुन्तला दुष्यन्त के पास जाती है तो ऋषि कण्व वृक्षों से विदाई का वर्णन निम्नरूप में करते है।

**पातुं न प्रथमं व्यसति जलं युष्माष्वपीतेषु या।**
**नादत्ते प्रियमण्डनापि भवतां स्नेहेन् या पल्लवम्।।**

अन्य पद्य में –

**सरसिजमनुविद्धं शैवलेनापिरम्यं,**
**मलिनमपि हिमांशोर्लक्ष्य लक्ष्मीं तनोति।**
**इयमधिकमनोज्ञा वल्कलेनापि तन्वी,**
**किमिव ही मधुराणां मण्डनं नाकृतीणाम्।।**[12]

**वरिष्ठ-अनुसंधान-अध्येता**
**राष्ट्रीय संस्कृत संस्थान भोपाल (म.प्र.)**

[12]अभिज्ञानशाकुंतलं 1.18

# संस्कृतकाव्यशास्त्रेऽलङ्कारभूमिका

**प्रियंका सिंह**

**न कान्तमपि निर्भूषं विभाति वनिताननम् ।**

संस्कृतभाषायाः संस्कृतकाव्यशास्त्रे अलङ्कारशास्त्रस्यभूमिका गुरुतमः। न अस्ति कस्या अपि भाषायाः अलङ्कारशास्त्रमद्यापि तज्जेतुं पारयन्ति। कस्याऽपि भाषायाः आलङ्कारिकग्रन्थाः विचारक्षमतायां वा शब्दावलिर्गणना विशालतरा स्यात्।अस्यां भाषायां विरचिता काव्यशास्त्रेऽलङ्कारशास्त्रस्यभूमिका स्वसारशालितया इतरभाषाणां ग्रन्थान् सलीलं पराभवन्ति। अस्याः अलङ्कारशास्त्रस्यभूमिका काव्यशास्त्रीय ग्रन्थेषु यद् व्यापकत्वं,यद्गभीरत्वं,यद्भिन्नार्थकत्वं,यत्प्रकृष्टत्वं,यन्निशितत्वं,यदोजत्वं, यत्सूक्ष्मत्वं, यच्च कामधुक्त्वं विद्योतते न तत्कस्या अपि शास्त्रे अलङ्कारशास्त्रम् सन्निहितमस्ति।

अलङ्कारस्यार्थाः **-अलंक्रियतेऽनेन इत्यलंकारः।**

**आनन्दवर्धनाचार्येणोक्तम् –**

**अपृथग्यत्ननिर्वर्त्यःसोऽलङ्कारोः ध्वनौ मतः।[1]**

अथ च यो जनः शास्त्रेऽस्मिन् न निष्णातोऽस्ति स व्यञ्जना- प्रतिपीद्यमानान् अर्थानपि नावबोद्धुं शक्नोति, एवं स्थिते तस्य गतिस्तेषु स्थानेषु केन प्रकारेण स्यात् यानि व्यङ्ग्यार्थ विलसितानि व्यञ्जकपदावलिपेशलानि च स्थलानि विद्यन्ते तस्मादलङ्कारशास्त्रविवार्यत्वेनाध्येताव्यतापेक्षते। शास्त्रस्यास्यानेकविशिष्टताः विलोक्यैव राजशेखरः शास्त्रमिदं वेदाङ्गमिव मनुते।

**स ब्रूते –** **उपकारकत्वादलङ्कारः सप्तमङ्गमिति यायावरीयः ।**
**ऋते च तत्स्वरूपज्ञानाद् वेदार्थनवगतिः॥[2]**

अलङ्कारशास्त्रं विना केवलं काव्ये नैपुण्यमेव न सम्पद्यतेऽपितु वाक्यदोषदृष्टिरपि नोत्पद्यते। यः खलु अलङ्कारशास्त्रज्ञानरहितो व्याकरणादिकं जान्नपि –

**चिन्तारत्नमिव च्युतोऽसि करतो धिङ्मन्दभाग्यस्य मे।[3]**

काव्यशास्त्रे साहित्यप्रतिपाद्यमलङ्कारमधिकृत्य –

**द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषष्वजते।**

---

[1] धवन्यालोक २.१७।

[2] काव्यमीमांसा २.३।

[3] काव्यप्रकाशः,उल्लास द्वितीय पृ.५९०।

**तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति॥[4]**
**तदप्युपमाऽस्ति।[5]**
इत्यादिनालङ्काराणां वेदे विद्यमानत्वात् अन्यशास्त्रवदलङ्कारशास्त्रस्याऽपि वेदोपजीवकत्वम्, तत एव साहित्यमूलस्य वेदाङ्गोपाङ्गसमानकालिकत्वं च प्रतिपत्तव्यम्।

एतत्पूर्ववर्तिना यास्केन स्वनिरुक्ते विविधोपमानां निरूपणमध्ये कर्मोपमाया लक्षणं विहितम् –

**यथा वासो यथा वनम् ,यथा समुद्रं सृजति।[6]**

अलङ्कारशास्त्रम् तु स्वजन्मसमयादेव नितरां लोकप्रियतां गतम्। तस्मादेतत् काव्यालङ्कारः – काव्यशास्त्र –क्रियाकल्प – साहित्यविद्या, अलङ्कारशास्त्रसाहित्यशास्त्रादि कतिपयनामाभिः ससम्मानं सानुरागञ्च समाहूता।

आधुनिकेषु सर्वप्रथमोऽलङ्कारशास्त्रग्रन्थे भामहप्रणीतः काव्यालङ्कार एव अतोऽस्य शास्त्रस्यालङ्कारशास्त्रनाम्ना प्रसिद्धिः।

काव्यशास्त्रेऽलङ्कारस्य प्राधान्यमपि येन केनापि रूपेण महाकवि दण्डिनोऽपि स्वीकृतमासीदेव।

**काव्यदर्शे – काव्यशोभाकारान् धर्मानऽलङ्काराः प्रचक्षते।**
**काश्चिन्मार्गविभागार्थमुक्ताःप्रागप्यलङ्क्रियाः॥[7]**

एतत्सम्प्रदायानुसारिणां मते अलङ्कारा एव काव्यजीवातवः। अलङ्कारहीनं काव्यस्वीकरणं तथैवोपहास्पदं भवति। यथोष्णतारहिताग्नि स्वीकरणम् –

एतदेवोक्तं पीयूषवर्षिय जयदेवेन –

**अङ्गी करोति यः काव्यं शब्दार्थावनलङ्कृती।**
**असौ न मन्यते कस्मादनुष्णमनलङ्कृती॥[8]**

संसकृतकाव्यशास्त्रे अलङ्काराणां विकासः क्रमशः सञ्जातः। वैदिकसाहित्ये तु उपमा – रूपकाद्यऽलङ्काराणां प्रयोगानि दृश्यन्ते।

**तत्रोपमा यथा – ईयुषीरागमुपमा शाश्वती नाम्।[9]**
**तद्यथा प्रियया स्त्रिया संपरिष्वक्तो सनमेवायं पुरुषः..........।[10]**

---

[4] ऋग्वेद १.१६४.२०।

[5] शतपथब्राह्मण १२.५.१.५।

[6] निरुक्त ५.७८.८।

[7] काव्यदर्शे पृ.३९।

[8] चन्द्रालोक प्रथम मयूख १.८।

[9] ऋग्वेदः १.११३.९५।

[10] बृहदा.४.३.२१।

**अरा इव रथ नाभौ संहता यत्र नाड्यः।**[11]

**साङ्गरूपकम् यथा – आत्मानं रथिनं विद्धि शरीरं रथमेव तु।**

**बुद्धिं तु सारथीं विद्धि मनः प्रग्रहमेव च ॥**[12]

अलङ्काराणां विधिवतनिरूपणं सर्वप्रथमं भरतमुनिप्रणीतानाट्यशास्त्रे दृश्यन्ते।**तत्रैवमस्ति –**

**उपमा रूपकं चैव दीपकं यमकं तथा।**

**अलङ्कारास्तु विज्ञेयाश्चत्वारो नाटकाश्रयाः॥**[13]

**काव्यालङ्कारसूत्रम् –**

**काव्यशोभायाः कर्तारोधर्मा गुणाः।**

**तदतिशय हेतवस्त्वलङ्कारः ॥**[14]

तदित्थं भोजराजेन स्पष्टीकृतम् –

**यद्विधौ च निषेधे च व्युत्पत्तेरेव कारणम्।**

**तद्धेयं विदुस्तेन लोकयात्रा प्रवर्तते ॥**[15]

काव्यम्, शास्त्रम्, इतिहासाश्चेति भोजदेवेन उक्तं यथा –

**काव्यं शास्त्रेतिहासौ च काव्यशास्त्रं तथैव च।**

**काव्येतिहासः शास्त्रेतिहासस्तदपि षड् विधम् ॥**[16]

भोजराजेन काव्यशोभाकरत्वमलङ्कारत्वमुक्तम्। अलङ्कारः कस्यचिदपि काव्यस्य पठने, श्रवणे, विलोकने वा सर्वं शब्दार्थ द्वारा सह्रदयान् समाकर्षति रसादिः व्यङ्ग्यार्थस्तु तदन्तरभूयते।गजल – कव्वाली-गीतानि प्रायः एवमेव भवति। सामाजिकाः जनाः तदाकर्ण्य तुन्दिलायन्ते, तत्र व्यङ्ग्यार्थोऽस्ति न कोऽपि न विचारयति। अनेन एव प्रकारेण बहूनामऽलङ्काराणां विविधान् ललितमधुरान् झङ्कारान् झंकृतिः संश्रुत्य आनन्दितो भवति।अपितु कश्चिद
आचार्योः तु काव्ये अलङ्कारस्यैव प्राधान्यम् आत्मत्वञ्च प्रतिपादितम्।

संस्कृतकाव्यशास्त्रे अलङ्कारप्रस्थानम् भामहादारभ्य आनन्दवर्धनात् प्राक्कालं यावत् काव्ये सर्वत्र प्राधान्यमभजत्। सर्वप्रथमं तु सुस्पष्टम् आनन्दवर्धनाचार्येणोक्तं यत् –

**अलंक्रियतेऽनेन, अलङ्करोतीत्यलङ्कारः।** इति व्युत्पत्ति वा अलङ्काराणां स्थितिरङ्गतया भवति, अङ्गी तु ध्वनिरेव भवति।

---

11 मुद्राराक्षसम् २.६।

12 कठोपनिषद १.३.३।

13 ना.शा.१.७.४३।

14 काव्यालंकारसूत्राणि ३.१.१.२।

15 सरस्वतीकण्ठाभरणम् २.१३८।

16 स.क..२.१३९।

**उक्तं यथा – काव्यस्यात्मा ध्वनिरिति बुधैर्यः समाम्नातपूर्वः।**

**किञ्च हारादिवदलङ्कारा मन्तव्याः कटकादिवत्॥**[17]

यस्मिंश्च काव्ये अङ्गभूतरसादेर्भिन्नस्य वस्तुनोऽलङ्कारस्य रसादिः वा प्राधान्यं स्यात् तर्हि तस्य चाङ्गतया रसादीनां वर्णनं भवोत् तत्र रसवदलङ्कारो मन्यते

**आनन्दवर्धनाचार्याः – प्राधानेऽन्यत्र वाक्यार्थे यत्राङ्गं तु रसादयः।**

**काव्ये तस्मिन्नलङ्कारो रसादिरिति मे मतिः॥**[18]

अलङ्काराः खलु कटककुण्डलादिवत् काव्यस्य आत्मा शब्दार्थशरीरम् अलङ्गकुर्वन्ति। अस्मादलङ्काराणाम् आत्मत्व प्रतिपादनम् आनन्दवर्धनः मम्मटादिभिः खण्डितम्।

**उपकुर्वन्ति तं सन्तं येऽङ्गद्वारेण जातुचित्।**

**हारादिवदलङ्कारास्तेऽनुप्रासोपमादयः॥**[19]

अलङ्कारो हि रसादिकम् अलङ्कार्यमलङ्करोति।

**रसभावादितात्पर्यमाश्रित्य विनिवेशनम्।**

**अलङ्कृतीनां सर्वासामलङ्कारत्वसाधनम्॥**[20]

अलङ्कारः खलु चारुत्वस्य हेतुतया विख्यातोऽस्ति। असौ आत्मा एव आत्मनश्च चारुत्वहेतुर्नहि भवितुमर्हति। अलङ्कारो हि वस्तुतः शोभाया उत्पादको न भवति, प्रत्युत पूर्वतो विद्यमानायां शोभायामुत्कर्षविशेषमानयति।

अतः वमनाचार्येण कथनम् – **सौन्दर्यमलङ्कारः,** इति कथनापेक्षया **गुणातिशयहेतुरलङ्कारः,** इति कथनम् अधिकाधिकः सङ्गतं प्रतिभाति। अलङ्कृतिरलङ्कार इति व्युत्पत्याऽप्यलङ्कारशब्देन पाकादिशब्दवत् भाव एव प्रतीयते। अस्याम् अवस्थायाम् अलङ्कारः सौन्दर्यपर्याय इति कथनमपि नूतनं चिन्तनीयम्।

चराचर संसारेऽपि वयं पश्यामो यत् कमनीयकामिन्याः शरीरे यो ह्यलङ्कारः शोभां वर्धयति। स एव वृद्धायाः शरीरे स्थितः अपेक्षया तस्याः सौन्दर्ये न्यूनतां सम्पादयति। अतो गुणरसादिभिरुत्पन्नस्य सौन्दर्यस्यैवोत्कर्षाधायको भवत्यलङ्कारः इति मन्तव्यम्।अनेन प्रकारेण संस्कृतकाव्यशास्त्रे अलङ्कारशास्त्रस्यभूमिका काव्यात्मत्व प्रतिपादनं समीचीनतां सम्पादिता।

**शोधच्छात्रा**

**साहित्यशास्त्रम्**

---

[17] ध्वा.१.१, २७।

[18] ध्वालोक २.५।

[19] काव्य प्रकाशः अ.उ.८.६७।

[20] ध्वन्यालोक लोचन टीका पृ.९०.९१।

# "संस्कृतजगत्यलङ्कारशिक्षणस्य प्राचीनार्वाचीनविध्योः तौलनिकमध्ययनम्"

**अविराम झा**

संस्कृतं नाम दैवी वाक्। इह जगति इयमेव शुद्धा, परिष्कृता, परिमार्जिता, सुसंस्कृता भाषास्ति। भाषाया अस्याः विविधरूपाणि भवन्ति। इदमेव रूपं भेदनाम्नापि कथ्यते, भाषायाश्च शाखाः इत्यपि केचन वदन्ति। अनेन समग्राध्ययनाय तासां भाषाणां सभेदाध्ययनं विधातव्यम्। अलङ्कारोऽपि अस्या भाषायाः शाखात्त्वेन वर्तते। अलङ्कारः यथा भाषायां व्याकरणम् अशुद्धिं परिष्कृत्य शुद्धतामानयति तथैव भाषासाहित्ये असौन्दर्यमपहृत्य सौन्दर्यं जनयति। अतः कस्यापि भाषासाहित्यस्य अध्ययने तस्य सौन्दर्यम् अनिवार्यमस्ति। अलङ्कारस्यार्थस्तु अलङ्क्रियतेऽनेन इत्यलङ्कारः[1] तत्पर्यायः भूषणम्, आभरणम्, परिष्कारः, विभूषणम्, मण्डनम्, अलङ्क्रिया, भूषा, अलङ्करणम्, [2] इत्यादिः। अलङ्कारः शब्दालङ्कारार्थालङ्कारोभयालङ्कारत्वेन त्रिधा। शब्दालङ्कारोऽपि प्रायशः षड्धा अनुप्रासः, यमकम्, पुनरुक्तिः, विप्सा, वक्रोक्तिः, श्लेषादयः। अर्थालङ्कारस्तु उपमा, रूपकम्, उत्प्रेक्षा, दृष्टान्तः, संदेहः, अतिशयोक्तिः, उपमेयोपमा, प्रतीकः, अनन्वयः, भ्रान्तिमान्, दीपकम्, अपह्नुतिः, व्यतिरेकः, विभावना, विशेषोक्तिः, अर्थान्तरन्यासः, उल्लेखः, विरोधाभासः, असंगतिः, मानवीकरणम्, अन्योक्तिः, काव्यलिङ्गम्, स्वभावोक्तिः इति त्रयोविंशतिधा भवन्ति। एतेषाम् अनेकाः शाखोपशाखाः विद्यन्ते। एतेषां समेषामध्ययनकर्तारस्तु छात्राः शिक्षकाश्च। छात्राध्येतृशिक्षकाणां कश्चनोत्तमः मध्यमः कश्चनाधमश्च। संस्कृतशिक्षणविषये महाकालिदासः कथयति यत्-

**श्लिष्टा क्रिया कस्य चिदात्मसंस्था, सङ्क्रान्तिरन्यस्य विशेषयुक्ता।**
**यस्योभयं साधु स शिक्षकाणां धुरिप्रतिष्ठापयितव्य एव ॥[3]**

अस्मिन् पद्ये कालिदासेनाऽपि संस्कृतसिहित्यशिक्षणविधेः प्राधान्यं स्वीकृतम्। शिक्षणस्य सम्बन्धविशेषः अर्थात् सम्बन्धिनः शिक्षकः वा अध्यापनकर्ता। संस्कृतसाहित्ये अलङ्कारशिक्षणम् अनेकेषु मनोवैज्ञानिकव्यावहारिकसिद्धान्तेषु विधिसु चाधारितमस्ति। अन्यत् च अस्याः प्रकृतिरपि अन्यभाषासाहित्येभ्यः भिन्ना वर्तते। तस्याः वैशिष्ट्यमनसि निधाय भाषसाहित्यशिक्षणस्य विधेरनुकरणं संस्कृतशिक्षकैः करणीयम्। वैदिककाले वेदाभ्यासे

---

[1]काव्यप्रकाशः

[2]शब्दरत्नावली

[3]मालविकाग्निमित्रम्

वेदस्वीकरणं, विचारो अभ्यासः जपः शिष्येभ्यो वेदानां दानञ्चेत्यादीनां पञ्चक्रियाणां समावेशो भवति स्म। एवं प्रकारे वेदाभ्यासेन एव तदयुगीनस्य शिक्षणविधेः बोधो भवति। वेदाभ्यासो न केवलं वेदानां विविधैः पद-घन-जटेत्यादिभिः पठनं नाम। वैदिककालिक्याः शिक्षायाः अवलोकनेन ज्ञायते यत् केचन शिक्षणविधयः अतीव प्रचलिताः आसन्। एतेषु अधीतिः, बोधः, आचरणं, प्रसारश्च प्रमुखाः सन्ति। अन्येऽपि विधयः प्रचलने आसन्यथा[4]। वैदिककाले तथा च पाश्चात्य शिक्षापद्धत्याः आगमनात्परं संस्कृतसाहित्यशिक्षणाय ये विधयः प्रयुज्यन्ते ते सर्वे प्राचीनविधीनामन्तर्गते निधीयन्ते। तेयथा- पाठशालाविधिः, मौखिकविधिः, पारायणविधिः, वाद-विवाद विधिः, प्रश्नोत्तरविधिः, सूत्रविधिः, कक्षानायकविधिः, भाषणविधिः, व्याख्याविधिः, व्याकरणविधिः, अनुवादविधिः, कथा-कथनविधिः

संस्कृतसाहित्ये काव्यशिक्षणस्य आधुनिकविधयः ते यथा-

1. गीतविधिः तथा नाट्यविधिः 2. भाषानुवादविधिः 3.व्याख्याविधिः 4. दण्डान्वयविधिः 5. खण्डान्वयविधिश्चेत्यादयः सन्ति। पौराणिककाले अनेके अभावाः आसन् उद्देश्यानि च भिन्नानि आसन् अतः तस्मिन् काले तद्वत् शिक्षणविधेः प्रयोगः काव्यशिक्षणे भवति स्म। आधुनिककाले संस्कृतकाव्यशिक्षणस्योद्देश्यान्यपि परिवर्तितानि अभावोऽपि दुरितानि। परन्तु तस्मिन्काले तेषामुपयोगः सम्यक् दृष्ट्या भवति स्म अनेनैव श्रुतिपरम्परया वेदाः संरक्षिताः भवन्ति स्म। आधुनिक संस्कृते काव्यशिक्षणस्योद्देश्यानि तथा नास्ति। आधुनिक शिक्षणोद्देश्यानि यथा- काव्यसौन्दर्यनुभूतेः, चिन्तनशक्तेः, तर्कशक्तेः, चतुर्णां कौशलानां सर्जनात्मकतायाः अन्तर्सम्बन्धस्य इत्यादयस्य विकासः अस्ति। अनेन अध्यापकस्य भूमिकाः महत्त्वपूर्णाः भविष्यन्ति। अध्यापकाः स्वकीयशिक्षणे कथं शिक्षणविधेरूपयोगः कुर्वन्ति। प्रायेण आधुनिकविधिषु अलङ्कारशिक्षणे दण्डान्वय-खण्डान्वयविध्योः उपयोगः प्रमुखत्त्वेन भवति।**"दण्डवत् खण्डवच्चैव द्विभेदोऽन्वय उच्यते"[5]।** दण्डान्वयविधेः नियमः अस्ति-

**आद्ये विशेषणं योज्यं विशेष्यं तदनन्तरम्।**
**क्त्वाणमुल्ल्यप्प्रभृत्येवं पूर्वं दण्डान्वये भवेत्॥**

अर्थात् दण्डान्वयस्य समये सर्वप्रथमं विशेषणम् अन्विष्य, विशेष्येण संयोजनीयम्। अनन्तरं कत्वाण्वुलल्यपादिप्रत्ययाः अन्वेषणीयाः। अनेन प्रकारेण प्रधानवाक्यम् अन्विष्य आश्रित्यवाक्यानां प्राप्तये। इत्थं सम्पूर्णपदं एकस्मिन् वाक्ये परिवर्तनमेव दण्डान्वयविधिरस्ति यथा निम्नलिखितयमकश्लोके-

**यो यः पश्यति तन्नेत्रे रुचिरेव न जायते।**
**तस्य तस्यान्यनेत्रेषु रुचिरेव न जायते॥**

अस्य श्लोकस्य सर्वप्रथमः अर्थः जानीयात् तत्पश्चात् दण्डान्वयः कृत्वा अलङ्कारः ज्ञायेत। श्लोकेस्मिन् **रुचिरे रुचिरे** द्वित्वेन यमकः इति। द्वितीयश्च विधिः खण्डान्वयः। अस्य विधेः लक्षणम्-

[4]अधीतिबोधाचारणप्रचारणैः दशाश्चतस्त्रः प्रणयन्नुपाधिभिः।–**नैषधीयचरितम् 1-3**

[5]अन्वयप्रबोधः

**कर्तृकर्मक्रियास्तावच्छलोके योज्यास्ततः परम्।**
**किमो रूपं पुरस्कृत्य तृतीयादि नियोजयेत्॥**
**ल्यबन्तं च तुमन्तश्च क्त्वान्तं कर्मविभूषितम्।**
**खण्डान्वये पुनः प्रश्नपूर्वमन्ते प्रयोजयेत्॥**[6]

खण्डान्वयविधिः प्रश्नोत्तरविधेः अङ्गमस्ति। परन्तु काव्यशिक्षणे काव्यस्य सौन्दर्यानुभूतेः अवसरं प्राप्नुवन्ति अनेन निरसः न भवति। अस्य प्रयोगोऽपि शिक्षणे करणीयम्। यथा-

**कस्तूरीतिलकन्ति भालफलके देव्या मुखाम्भोरुहे**
**रोलम्बन्ति तमालबालमुकुलोत्तंसन्ति मौलावपि।**
**याः कर्णे विकचोत्पलन्ति कुचयोरङ्को च कालागुरु-**
**स्थासन्ति प्रथयन्तु तास्तव शिवं श्रीकण्ठकण्ठत्विषः॥**[7]

अस्यार्थोऽपि प्रश्नमाध्यमेन ज्ञातव्यः अनन्तरं कोऽयमलङ्कारविशेषः इत्यपि ज्ञातव्यः। श्लोकेऽस्मिन् उत्प्रेक्षा अलङ्कार विशेषः। भविष्ये अस्य विधेरूपयोगोऽपि प्रवर्तितव्यः। शिक्षणविधेः समयानुसारं परिस्थित्यनुसारं प्रयोगः करणीयः।

**निष्कर्षः-** संस्कृतसाहित्ये अलङ्कारशिक्षणे पौराणिकविधेः स्थाने आधुनिकविधिरनुसरणीयः। आधुनिकविधिषु दण्डान्वयखण्डान्वयप्रयोगः अवश्यमाचरणीयः। अनेनालङ्कारस्य सम्पूर्णं शिक्षणं भवितुमर्हेति।

**सन्दर्भग्रन्थाः**

1. संस्कृतशिक्षणम्- डॉ. मित्तलसन्तोषः- नवचेतना प्रकाशनम् जयपुरम्।
2. अलङ्कारसर्वस्वम्- व्याख्याकारः- डॉ.द्विवेदी रेवाप्रसादः- चौखम्भा संस्कृत संस्थानम्।
3. काव्यप्रकाशः- प्रो. भट्टाचार्यः विश्वनाथः- त्रिपाठी जयशंकरलालः- का.हि.वि.वि.ग्र.माला
4. अलङ्कारसारः- प्रो. शुक्लः कुमारबृजेशः- सम्पूर्णानन्द संस्कृत विश्वविद्यालयःवाराणसी।
5. साहित्यदर्पणः- विश्वनाथः- लक्ष्मी टीका, चौखम्बा संस्कृत सीरिज वाराणसी।
6. शब्दकल्पद्रुमः- सृजन झा एवं श्रुति झा- अन्तर्जाल एप।
7. अन्वयप्रबोधः-
8. नैषधीयचरितम्- श्रीहर्षः-डॉ कमलेश कुमार तिवारी –चौखम्बा सुरभारती प्रकाशन।
9. मालविकाग्निमित्रम्- पं. मिश्र रामचन्द्रः- चौखम्बा संस्कृत सीरिज वाराणसी।
10. शब्दरत्नावली- मधुरेशः, 17 (सताब्दी)- अर्क प्रकाशन।

[6] संस्कृतशिक्षणम्- सन्तोषमित्तलः

[7] अलङ्कारसर्वस्वम्- 201 चौखम्बा संस्कृत संस्थान।

# "अलङ्कारशिक्षणे सूचना-संचार-प्रद्योगिक्याः योगदानम्"

**कौशल कुमार झा**

"अलम्" पूर्वककृधातोः प्रयोगेण अलङ्क्रियते अनेन, अलंकरोति इति व्युत्पत्तिकरणात् परम् अथवा भावे अर्थे घञ् प्रत्ययपूर्वकम् अलंकारः इति पदं निष्पन्नम्। अस्य पदस्य अर्थः भवति येन तत्वेन कश्चित् पदार्थः सुशोभितः भवति तत्पदार्थः अलङ्कारः इति कथ्यते। यथा कुण्डलादिः भैतिकशरिरम् अलंकरोति तथैव अनुप्रासोपमादिरलङ्कारः शब्दार्थशरिरं काव्यम् अलंकरोति। रससम्प्रदायः काव्यशास्त्रस्य इतिहासे अत्यन्तः प्राचीनः काव्यसिद्धान्तः अस्ति। रससम्प्रदायस्य पश्चात् अलङ्कारसम्प्रदायः द्वितिये स्थाने अस्ति। सर्वप्रथमम् नाट्यशास्त्रे चतुर्णाम् अलङ्काराणां विवेचनं भरत कृतः। भामह् तथा तस्य उत्तरवर्तिः दण्डी- इत्यादयः आचार्याः रसमेव नाटकस्य सुख्यं विषयं मत्वा अन्येषु काव्येषु अलङ्काराणां प्रधानता प्रस्तुतवन्तः। तद् पश्चात् पण्डितजगन्नाथः सर्वे आचार्याश्च अलङ्काराणां महत्ता एवं स्थितेः सम्बन्धे स्व–स्व विचारान् प्रस्तुतवन्तः। अलङ्कारः अर्थात् अलंकरोति , यः अलंकरोति सः अलङ्कारः । उक्तमपि–अलंकरोति इति अलङ्कारः। भारतीये साहित्ये अनुप्रास-उपमा–रूपक-अनन्वय-यमक–श्लेष–उत्प्रेक्षा–संदेह्–अतिशयेक्तिः–वक्रोक्तिः इत्यादयः मुख्यालङ्काराः सन्तिः। अनेन् व्युत्पत्याः उपमा–इत्यादयः अलङ्कारः इति कथ्यन्ते। उपमा–इत्यादिनां कृते अलंकारशब्दस्य प्रयोगः संकुचिते अर्थे भवति। व्यापके अर्थे सौंदर्यमात्रमेव अलंकारः कथ्यते तथा तस्मात् एव काव्यस्य ग्रहणं क्रियते। काव्यं ग्राह्यमलंकारात्। सौदर्.मलंकार वामनः चारुत्वमपि अलंकारः कथ्यते। भामहस्य विचारे वक्रार्थविजा एका शब्दोक्तिः अथवा शब्दार्थवैचित्र्यस्य नाम् अलंकारः अस्ति।वक्राभिधेतशब्दोक्तिरिष्टा वाचामल–कृतिः। रूद्रटः अभिदानप्रकारविशेषमेव अलंकारः कथयति।अभिधानप्रकारशविशेषा एव चालंकाराः। दंडीः अनुसारं–काव्यशोभाकरान् धर्मान अलंकारान् प्रचक्षते। सामान्यः कथनीयवस्तुः समिचीनरीत्या अभिव्यक्तिप्रदानदृष्ट्या अलंकारः प्रयुज्यते। एतैः भावान् उत्कर्षं प्रदियते अथवा रस–गुण–क्रिया इत्यादिनां अधिकं तीव्रम् अनुभवं क्रियते। अतः मनस्यम् ओजमेव अलंकाराणां वास्तविकं कारणमस्ति। रूचिभेदः चमत्कारप्रियश्च व्यक्तिः शब्दालङ्काराणां तथा भावुक-व्यक्तिः अर्थालंकाराणां प्रयोगः कुर्वन्ति। शब्दालंकाराणां प्रयोगे पुनरूक्तिः प्रयत्नलाघवः–उच्चारणं–तथा ध्वनिसाम्यः मुख्याधारभूतः सिद्धान्तः मन्यते तथा पुनरूक्तिमेव आवृतिः मत्त्वा अस्य वर्ण-शब्दः–पदस्य च त्रयः भेदाः मन्यते येषु क्रमशः अनुप्रसः–छेकं–एवं यमकं–पररूक्तावदाबीसस्यतथा लाटानुप्रासस्य ग्रहणं क्रियते।वृत्यानुप्रयासः प्रयत्नलाघवस्य उदाहरणमस्ति। वृत्तिनां रीतिनां च अविष्कारः अस्य प्रयत्नलाघधवस्य कारणात् एव भवति। श्रुत्यानुप्रयासे ध्वनिसाम्यः स्पष्टः भवति। एतद् अतिरिच्य चित्रालंकाराणां रचनायां कौतुहलप्रियता–वक्रोक्तिः–अन्योक्तिः–तथा विभावनादि अर्थालंकाराणां रचनायां वैचित्र्येषु

आनन्द-अनुभूतिः प्रवृतिः कार्यं करोति। अर्थालंकाराणां संगठनं भावाभिव्यञ्जन-न्यूनाधिकारिणी-तथा तर्कना मनोवृत्तिनामाधारेण भवति। ज्ञानस्य सर्वेषु क्षेत्रेषु अलंकारस्य प्रयोगः भवति। यथा व्याकरणस्य आधारेण क्रियामूलकभाविकः–विशेष्य- विशेषण–मूलकश्च अलंकाराणां प्रयोगः भवति। मनोविज्ञानात् स्मरणम्–भ्रमः–सन्देहः–उत्प्रेक्षायाः ग्रहणं भवति। दर्शनात् कार्य–करण–संबंधी-असंगतिः–हेतुः–प्रमाणश्च इत्यादिनां अलंकाराणां ग्रहणं भवति।आचार्य वामनस्य अनुसारेण- काव्यशोभायाः करात्तारो धर्मा गुणाः। तदतिशयहेतवस्त्वलंकाराः। का. सू.। आचार्य आनन्दवर्धनः एतान् अलंकारान् काव्यशरिरे कटककुण्डल–इत्यादिः सदृशःमन्यते।तमर्थमवलंबते येऽङ्गिनं ते गुणाः स्मृताः अंगाश्रितास्त्वलंकारामन्तव्याः कटकादिवत्[1]।काव्यप्रकाशेऽपि वर्णितमस्ति।**“तददोषौ शब्दार्थौ सगुणावनलङ्कृति पुनः क्वापि” [2]** जयदेवः अलङ्कारान् काव्यधर्मस्य रूपे प्रत्यस्थापनं कुर्वन्ननिवार्यमस्थानं प्रदत्तवान्। अलङ्कारः काव्यस्य नित्य धर्मः अस्ति।“अङ्गिकरोति यः काव्यं शब्दार्थावलङ्कृती। असौ न मन्यते कस्मादनुष्णमलं कृति[3]। अभिनवगुप्तस्य विचारेण यथा अचेतनं शवशरीरं कुण्डलाधुपेतमपि न भाति अलङ्कारस्याभावात्। ध्वन्यालोके “अनन्ता हि वाग्विकल्पाः” अलङ्काराणाम् अगणेयतायाः प्रति सङ्केतं करोति तथापि विचारकाः अलङ्काराणां विभाजनं- शब्दालङ्कार-अर्थालङ्कार-रसालङाकार-भावालङ्कार-मिश्रालङाकार-उभयालङ्कार तथा संसृष्टिः- संकरश्च नामकेषु विभागेषु कृतम्। अलङ्कारः मुख्यतया त्रिधाः भवन्ति यथा- शब्दालङ्कारः, अर्थालङ्कारः, उभयालङ्काश्चेति।

सूचनासंचार प्रौद्योगिकी माध्यमेन आधुनिके युगे प्रभावशाली अलङ्कार शिक्षणं कर्तुं शक्यते। सूचनासंचारप्रौद्योगिक्याः प्रभावेण कार्यस्य गतिः वर्धते।अलङकारशिक्षणे सूचनासंचार प्रौद्योगिक्याः प्रभावः सम्यक्रूपेण द्रष्टुं शक्यते। जालपुटं अलङ्कारशिक्षणस्य एकं शसक्तं माध्यमम् अस्ति। अतः इदं वक्तुं श्क्यते यत् सूचनासंचारप्रौद्योगिकी अलङ्कारशिक्षणेऽपि एकं शसक्तमाध्यमरूपेण कार्यं करोति इति।

**सन्दर्भग्रन्थाः**


1. अलङ्कारसर्वस्व- डॉ. रेवाप्रसाद द्विवेदी- चौखम्बा संस्कृत संस्थान वाराणसी
2. संस्कृत शिक्षण –डॉ. महेन्द्र प्रकाश मिश्रा – श्याम प्रकासन जयपुर
3. काव्यप्रकाशः – प्रो. विश्वनाथ भट्टाचार्यः –काशी हिन्दु वि.वि वाराणसी
4. अलङ्कारसारः- प्रो. बृजेश कुमार शुक्लः –सं. सं. वि. वि. वाराणसी
5. संस्कृत शिक्षणम्- डॉ. संतोष मित्तलः- नवचेता पब्लिकेसन्स जयपुरम्।
6. शिवरामवामन आप्टे- संस्कृतशब्दकोषः
7. रूपचन्द्रिका- चौखम्बा संस्कृत संस्थानम् वाराणसी।


**शिक्षाशोधच्छात्रः**

**दूरभाषा-707035853**

[1]ध्वन्यालोक

[2]काव्यप्रकाशः

[3]चनद्रालोकः

# प्रशान्तराघवनाटके उपमालङ्कारसौन्दर्यम्

घनश्यामः मीणा

अर्थालङ्कारेषु प्रथमतयागण्योऽलङ्कारः उपमा भवति। प्रायः सर्वे कवयः अस्यालङ्कारस्य प्रयोगं कुर्वन्ति।

आचार्योभिराज राजेन्द्रेणाऽपि अस्मिन् नाटके उपमायाः रूपकस्य अनुप्रासस्य च प्रयोगः कृत। तत्र प्रथमं उपमायाः लक्षणं पश्यामः। उपमा बहुविधा भवति तासां पृथक्- पृथक् लक्षणमत्र प्रस्तूयते-

सामान्य उपमाऽलङ्कारलतक्षणं-

**उपमा यत्र सादृश्य लक्ष्मीरुल्लसति द्वयोः।।1।।**

(चन्द्रालोकः पञ्चम मयूखः,श्लोक11,पृष्ठ81।।जयदेव।।)

अर्थात् यत्र उपमानोपमेययोः समामतावर्ण्यते तत्र समानतायाः साधारणधर्मः वर्ण्यते तथा इव निभः तुल्य सदृशादयः उपमावाचकः शब्दः भवति सा उपमामता। उपमायाः एवं प्रकारेण चत्वारि अङ्गानि भवन्ति।

- ❖ उपमेयं- उपमितं योग्यं- मुखम् वर्ण्यमानम् प्रकृतः सामान्यं प्रस्तुतः।
- ❖ उपमानं- उपमीयते अनेन इति उपमानं विशेषः अप्रकृतः अप्रस्तुतः।
- ❖ साधारणधर्मः- समानतायाः कारणं यथा सौंदर्य।
- ❖ वाचक शब्दाः- इव तुल्य निभःसदृश्यस्पर्धी इत्यादयः वाचकः शब्दाः।

यत्र उपमायाः चत्वारि अङ्गानि वर्ण्यन्ते तत्र पूर्णोपमा भवति। यत्रैकस्य द्वयोः त्रयाणां वा अङ्गानां लोपः भवति तत्र लुप्तोपमा भवति, बहूनां उपमानां समूहः मालोपमा भवति।

अस्मिन् प्रशान्तराघवंनाटके उपमायाः प्रयोगो सर्वाधिकः विहितः मन्ये कवेप्रियोऽलङ्कारः उपमा एव वर्तते। अस्य प्रयोगस्य विश्लेषणमत्र प्रस्तूयते यथा-

**“महाम्भोधौ निवसतेऽपि तरङ्गः कदम्बकानभिज्ञस्य पाठीनस्येव ते स्थितिः।”**

(प्रशान्तराघवम् प्रथमोऽङ्क, पृष्ठ 25)

अत्र दर्शक उपमेयः पाठिनः उपमानः इव वाचक शब्द तरंगकदम्बकाऽनभिज्ञस्य स्थितिः साधारण धर्म इति वर्णितः अतोऽत्र पूर्णोपमा अलङ्कारः।

**“साधु साधु! प्रिये साक्षाद्रतिरिव प्रतिभासि।”**

(प्रशान्तराघवम् प्रथमोऽङ्क, पृष्ठ 26 श्लोक4)

अत्र नटी उपमेयं रतिः उपमानं इव वाचकः शब्दः साधारण धर्मः न प्रदत्तः अतोऽत्र लुप्तोपमा विद्यते।

**"सींगन माँ माटी लगाये जस दिनभर लड़ै"**

(प्रथमोऽङ्क, पृष्ठ 30)

अत्र रमेशः उपमेयः साँड उपमान जस उपमानवाचकं लड़ै इति साधारण धर्मः अतोऽत्रपूर्णोपमा विद्यचे।

**"शिलीन्ध्रकोमलाङ्गि सीते!"**

( प्रथमोऽङ्क, पृष्ठ 33)

अत्र सीता उपमानं शिलीन्ध्रउपमेयं कोमलाङ्गी  साधारणधर्म इव उपमावाचकः शब्दः समासात् न दत्तः अत्र उपमित समासात् पूर्णोपमाविद्त्।

**"कृतजागरेण मयाऽभिन्नसुहृदिव लालितः अग्रजः"**

(द्वितीयोऽङ्क,पृष्ठ46)

अत्र लक्ष्मणः उपमेय अभिन्नसुहृदय उपमानं इव वाचक शब्दः लालितः साधारणधर्मः अतोऽत्र पूर्णोपममा विलसति।

**एकेन नीचेन मया पुरियं निजापराधेन कृताऽवसन्ना।**
**वापीय हालाहलबिन्दुनेव न मे गतिस्सम्प्रति कल्मषाणाम्।।3।।**

(तृतीयोऽङ्कं, श्लोक49,पृष्ठ60)

अत्र उपमाद्वयं विद्यते।प्रथमं तु रजकः उपमेयं बिन्दु उपमानं द्वितीयं अयोध्यापुरी उपमेयं वाणी उपमानं बिंदु अवसन्ना साधारणधर्मः अतोऽत्र पूर्णोपमामाला अलङ्कारः विद्यते।

**निदाघदहनोपमो मलयमरुतोऽभासत।।4।।**

(चतुर्थोऽकं,श्लोक1,पृष्ठ64)

अत्र मलयमारुतः उपमेयं निदाघदहनः उपमानं उपमः वाचकशब्दाः साधारणधर्मः लुप्तः अतोऽत्र लुप्तोपमा विद्यते।

**विधुरिवसुखयति दिवसे तपनः।।5।।**

(चतुर्थोअंक, गीत8,पृष्ठ68)

अत्र सूर्य- उपमेयं विधुः उपमानं सुखयति साधारणधर्मः इव वाचतशब्दः अतोऽत्र पूर्णोपमा विलसति।

**क्षोणी चक्रमिवाऽनिशं चतुरुदन्वन्तो मम भ्रातरौ।।6।।**

(पंचमोऽङ्क,श्लोक1,पृष्ट73)

अत्र भ्रातरौ उपमेयं क्षोणी चक्रम् उपमानं तथा इव वाचकशब्दः उदन्वन्त साधारणधर्मः अतोऽत्र पूर्णोपमा विलसति।

**"कादम्ब इव मन्मनस्त्वप्रणय पुष्कर विरहितुमिच्छति।"**

(पंचमोऽङ्क, पृष्ठ74)

अत्र कादम्ब उपमानं मन्मनःउपमेयं इव वाचकः तथा विहारतिमिछछति इति साधारणधर्मः अतोऽत्र पूर्णोपमा विलसति।

**"आर्यपुत्र! कुसुमसुकुमारौ मम दारकौ।"**

(पंचमोऽङ्क,पृष्ठ77)

अत्र उपमित समासात् उपमाऽलङकारः।

**"सखि!सत्यमेवेदृशी सा। विहङ्गी सत्यपि मर्त्याङ्गनेव विवेकपुरस्सरं लपति।"**

(सप्तमोऽङक,पृष्ठ89)

अत्र विहङ्गी उपमेयंमर्त्याङ्गना उपमानं इव वाचकः लपति साधारणधर्मःउपमायाः चतुर्णा अङ्गानां कारणात् पूर्णोपमाऽलङ्कारः

**नाटकेस्मिन् उपमाऽङ्कारस्य अन्योदाहरणानी-**

**रङ्गभूमिसमासीना निश्शब्दाः खलु दर्शकाः**
**लक्ष्यन्ते वटशाखायां स्थिता नैशखगा इव ।।7।।**

(प्रथमोऽङ्क, पृष्ठ29)

**भूरिदीप्तं कमलसुममिव प्राज्यगन्धं विधत्ताम्।।8।।**

(चतुर्थोऽङ्क, श्लोक7,पृष्ट67)

**अद्य सुरपुरमिव विलसति भवनम्**
**देवी सीता सूतवतीह तनययुगलम्।।9।।**

(चतुर्थोऽङ्क, गीतम्, पृष्ठ67 )

**सागरसदृशं विशालहृदयमस्मन्महाराजस्य।**

(षष्ठोङ्क,पृष्ठ72)

**हिमहारनीहारपाण्डुरहृदय एकनिष्ठरतिर्भर्ता।**

(सप्तमोऽङ्क,पृष्ठ90)

**कापोतीं कायशोभआमिह दधतु दिशो यज्ञधूमप्रचारै-**
**र्गृष्टीनां रम्ययूथस्स्रुतधवलपया राजतिं सम्मुखीनः।।10।।**

(सप्तमोऽङ्क,पृष्ठ91)

**तीरद्वयोपमसुतद्वयपूतकुक्षिर्गङ्गेव मैथिलसुता यमवाप्य धन्या।।11।।**

(सप्तमोऽङ्क,श्लोक20,पृष्ठ93)

**भार्या मे निमिनन्दिनी जनकजा पुत्रीव संल्लालिता**
**प्रीत्या मे यमजौ सुतौ कुशलवौ शिष्यौ भवद्भिः कृतौ।**
**कल्पान्तस्थिरया भवत्कवितया यच्चास्म्युपश्लोकितः**
**तेनाऽहं सचराचरात्मधरणीचक्रः कृतार्थोऽभवम्।।12।।**

(सप्तमोऽङ्कः,श्लोक23,पृष्ठ94)

एवमत्र प्रशांतराघवनाटके उपमायाः सुंदरः समावेशः विहितः।

शोधच्छात्रः साहित्यशास्त्र
विभाग
राष्ट्रियसंस्कृतसंस्थान, भोपालपरिसरः

# संस्कृतकाव्यशास्त्रेऽलंकारविषयकपरम्परा

शिवब्रह्मनारायणप्रतापः

संस्कृतकाव्यशास्त्रे षड्सम्प्रदायास्सन्ति। रस-अलङ्कार-रीति-वक्रोति-ध्वनि-औचित्यानि इति। तेषु अलङ्कारस्योद्भवं भामहेन कृतम्। अलङ्कार विषये मम्मट वक्ति-

**उपकुर्वन्ति तं सन्तम्**[1]

काव्यशास्त्रस्येतिहासे रससिद्धान्तपश्चात् अलङ्कारसिद्धान्त एव प्रामुख्यं भजते। भरतमनु काव्यशास्त्राचार्येषु भामह एव विशिष्टः। तस्य ग्रन्थः काव्यालङ्कारनाम्ना प्रथितः।भामहदण्ड्युद्भटप्रभृतय आचार्या रसं प्राधान्येन नट्यविषयं मत्वा अन्येषु काव्येषु अलङ्काराणां प्राधान्यं प्रकल्पितवन्तः। काव्येषु अलङ्कारा एव अङ्गित्वेन प्राधन्येन च प्रतिपाद्य तैः रसादयो अलङकारणामङ्गरूपेण उपरकाररूपेण च साधिताः। तथा चोक्तं भामहेन-

**न कान्तमपि निर्भूषं विभाति वनिताननम्।।**[2]

अर्थात सुन्दरमपि ललनामुखं भूषणैर्विना यथा न शोभते, तथैव सरसकाव्यस्य शोभा अलङ्काररैव सम्पाद्यते। रसभावादीनामन्तर्भावोऽलङ्कारेषु एव स्वीकृत्य असौ काव्येषु अलङ्काराणामङ्गित्वं रसानाञ्च अङ्गभावं प्रतिपदितवान्।भामहान्तर प्रायशः कर्वे आचार्यः काव्येषु अलङकारतत्वस्य प्राधान्यं तावतकालपर्यन्तं स्वीकुर्वन्तो दरीदृश्यते यावद् आनन्दवर्धनो ध्वनितत्वं सहित्यशास्त्रे प्रतिष्ठाप्य तं ध्वनिं काव्यास्याऽऽत्मत्वेन संस्थापितम्। इत्थमलङ्कारवादिभिराचार्यैः काव्येषु अलङ्कारतत्त्वस्य प्राधान्यं प्रतिपादितं। काव्येषु सौन्दर्यस्य रमणीयताय़ाश्त सर्वाण्येव तत्वानि अलङ्कारपदवाचकानि भवन्तीति तेषां मतम्। अत एव काव्यशास्त्रस्य विवेच्यतत्वेषु अलङ्कारतत्त्वमतिमहत्त्वपूर्णमस्ति।

काव्यसमालोचनोपक्रमोऽलङ्कारविवेचनप्रभवः। अलङ्काराश्च काव्यस्याऽनिवार्योपकरणानि तत्र च प्रमुखानि सौन्दर्याधायकतत्वानि परिगणितानि। अलङ्काराणां समुचितगहनमीमांसाकरणाद् वक्रोक्त्यलङ्कारस्य समुद्भवो बभूव। तस्माच्च वक्रोक्तिसम्प्रदायः प्रावर्तते। अनेकेलङ्कारा वाच्यादतिरिक्तं कश्चिदन्यमर्थमपि बोधयन्ति।

---

[1] काव्यप्रकाश (प्र.उ.)

[2] काव्यालंकारः

यथा दीपकपर्यायोक्ततुल्ययोगितासमासोक्त्यप्रस्तुतप्रशंसादयोऽलङ्कारा: । अयमन्योऽर्थः प्रतीमान एव यस्माच्च ध्वनिसम्प्रदायः प्रावर्तत । एवञ्च काव्यसमालोचनसिद्धान्तानां मूलकारणमलङ्कारः एव अतः समालोचनविद्यायाः शास्त्रस्य चाऽलङ्कारशास्त्रमिति नामकरणं समुचितमेव।

अलङ्कारशास्त्रस्य लक्ष्यमानेषु ग्रन्थेषु भरतमुनेर्नाट्यशास्त्र प्रथमम्। तत्र नाट्ये प्रयोज्यानि भूषणाक्षसंघातादीनि षटित्रंशल्लक्षणानि आशीराक्रन्दकपटप्रभृतयः त्रयस्त्रिंशन्नाट्याकृतयश्च प्रतिपादिताः। भूषणाक्षरसंघातौ शोभोदाहरणे तथा। षटित्रंशल्लक्षणान्येवं काव्यबन्धेषु निर्दिशेत' इति । अत्र काव्यशब्दो परममीति लक्षणानि नाट्यालङ्कतीश्च गुणालङ्कारयोरन्तर्भावं प्रतिपादयतः साहित्यदर्पणकारस्य विश्वनाथस्य एषां च लक्षणनाट्यकाराणां समान्यत एकत्वेऽपि भेदेन व्यपदेशो गङ्डलिकाप्रवाहेण । एषु च केषाञ्चिद् गुणालङ्कारभानवसन्ध्यङ्ग विशेषान्तर्भावेऽपि नाट्ये प्रयत्नतः कर्तव्यत्वाद् विशेषोक्तिः । इति वचनेन प्रतीयते । भरतेन पुनः उपमा रूपकं चैव दीपकं यमकं तथा इत्युपमादयः स्पष्टोऽलङ्कारशब्देनाभिहिताः । एवं नाट्यशास्त्रे चतुर्णामेवोल्लेखः । तत्रोपमारूपकदीपकानि सादृश्याभेदेप्रधानानां पश्चाद् विकसतामर्थालङ्काराणां यमकं च शब्दालङ्काराणां बीजन्युपलक्षणानि वा मन्तु शक्यन्ते । किञ्च भूषणादिलक्षणेभ्योपि पश्चान्तनाम् अलङ्काराणं विकासो मन्यते । भारतादर्वाचीनैराङ्कारिकैः पश्चाद् हेतू-संशय-दृष्टान्त-निदर्शन-गुणातिशयार्थापत्ति लेशप्रभृतीना लक्षणानि तत्तन्नामभिरलङ्कारत्वेन स्वीकृतानि।

भूषणार्थक " अलंपूर्वकात् कृधातो " **अलङ्क्रियतेऽनेन अलङ्करोति वेति** निर्वचने करणे भावे वाऽर्थे घञ् प्रत्यये सति अलङ्कारपदं निष्पद्यते । भावे तु **अलङ्कृतिरलङ्कारः** इति काव्यसौन्दर्यपदवाचकमेव । अस्मिन्नर्थे शब्दोऽयं व्यापकत्वं धारयति । यथोक्तं वामनाचार्येण- ''**अलङ्कृतिरलङ्कारः** '' **करणव्युत्पत्या पुनरलङ्कारशब्दोऽयमुपमादिषु वर्तते।**[3] यद्यपि वेद-ब्राह्मणोपनिषद्-निरुक्त-व्याकरणग्रन्थेषु अलङ्कारनिर्वचनस्य संकेतः प्राप्यते, उदाहरणानि चोपलभ्यन्ते, तथापि तदानीन्तनयुगे कश्चिदलङ्कारशास्त्रीयो ग्रन्थः आसीदिति निश्चिरूपेण कथयितुं न शक्यते। साहित्यशास्त्रीयग्रन्थेषु सौन्दर्याभिधायकतत्त्वरूपेण अलङ्कारपदप्रयोगः सुस्पष्टरूपेण भरतमुनिविरचिते नाट्यशास्त्रग्रन्थे दृश्यते। भरतकृतनाट्यशास्त्रमेव प्राचीनतमो ग्रन्थो यत्र अलङ्काराणां शास्त्रीय विवेचनं विद्यते। तत्र चत्वारोऽलङ्कारा निरुपिताः। यथा-

**उपमारूपकं चैव दीपकं यमकं तथा।**

---

[3] काव्यालङ्कारसूत्रवृत्तिः

**अलङ्कारास्तु विज्ञेयाश्चत्वारो नटकाश्रयाः।।**[4]

भामहमारभ्यालङ्काराणां संख्या वर्धते । भामहस्य काव्यालङ्कारे ३९ अलङ्काराः स्वीकृताः, रसादयो रसवदाद्यलङ्कारत्वेनैव मताः । दण्डिनः कव्यादर्शे चित्रानुप्रासयमकादिशब्दालङ्कारेभ्योऽतिरिक्ताः ३५ अर्थालङ्कारा निरुपिताः । उद्भटस्य काव्यालङ्कारसंग्रहे षटसु वर्गेषु ४१ अलङ्कारा प्रतिपदिताः। भोजेन श्रृंगारप्रकाशस्य दशमें प्रकाशे ७२ अलङ्काराः कथिताः तत्र **"ये शब्दमेव व्युत्पत्या भूषयन्ति ये शब्दालङ्काराः"**[5] इति लक्षणं विधाय जाति-गति-वृत्ति-घटना-मुद्रा-च्छाया-युक्ति-उक्ति-भणिति-पणिति-श्रव्यत्व-प्रेक्ष्तव-अभिनेयत्व-अध्येत्व-वाकोवाक्य-प्रश्नोत्तर-प्रहेलिका-गूढ-चित्र-श्लेष—यमक-अनुप्रासरुपाः चतुर्विंशतिः शब्दालङ्काराः "**अर्थमेव ये व्युत्पत्या भूषयन्ति तेऽर्थालङ्काराः**"[6] इति लक्षणं निर्माय- जाति सूक्ष्म-सार-समाहितभाव-विभावना-हेतू-अहेतु-सम्भव-विरोध-दृश्टान्त-व्यतिरेक-अन्योन्य-परिवृत्ति-मीलित-वितर्क-स्मरण-भ्रान्ति-उपमान-अनुमान-अर्थापत्ति- अभाव-आगम-प्रत्यक्षरूपाः चतुर्विंशतिरर्थालङ्काराः "**शब्दविशेषद्वारकोऽर्थविशेषो येषु प्रतीयते ते उभयालङ्काराः** "[7]

इति लक्षणं कृत्वा उपमा-रूपक-साम्य-संशय-समाधि-समासोक्ति-सहोक्ति-समुच्चय-तुल्ययोगिता-लेश-अपह्नुति-अप्रस्तुतप्रसंशा-उत्प्रेक्षा-अर्थान्तरन्यास-दीपक-परिकर-क्रम-पर्याय-अतिशय-आक्षेप-विशेष-श्लेष-भाविक- संसृष्टिरुपाश्चतुर्विंशतिरुभयालङ्काराश्च भोजेन निरुपिताः । ततो मम्मटः काव्यप्रकाशे अनुप्रास-यमक-पुनरुक्तवदाभास- वक्रोक्ति-चित्ररुपान, शब्दालङ्कारान निरुप्योपमाप्रभृतीन् एकषष्टिम् अर्थालङ्कारान् न्यरूपयद् यत्र संसृष्टिसंकरावपि वर्तते । एवमप्पयदीक्षितं यावदर्थालङ्काराणां संख्या शताधिका जाता । पण्डितराजेन सप्ततिरेवार्थालङ्काराः स्वीकृताः । नागेशभट्टेन काव्यप्रकाशनिरूपितेषु एकषष्टावेव अर्थालङ्कारेषु तदतिरिक्तानामलङ्काराणां यथा संभवमन्तर्भावः साधितः । एवमर्थालङ्कारसंख्यास्वेव भूयान् विकासः काव्यशास्त्रे परिलक्ष्यते शब्दालङ्कारारास्तु पुनरुक्तवदाभास-अनुप्रास-यमक-श्लेष-वक्रोक्ति-भषासम-चित्रप्रहेलिकारूपेण परिगणिता एव भेदा विकसिताः ।

तत्रापि चित्रप्रहेलिकयोः अलङ्कारत्वमेव ध्वनि-वदिभिर्निरस्तम् । वस्तुतोऽर्थालङ्काराणामनन्ता भेदाः संभवन्ति । उक्तिवैचित्ररुपा अलङ्कारा भवन्ति । अतएव

4 ना.शा १७अ.१-५

5 श्रृंगारप्रकाश (द.प्र)

6 श्रृंगारप्रकाश (द.प्र)

7 श्रंगारप्रकाश (द.प्र.)

ध्वन्वालोके ध्वन्यालोके ध्वन्यभाववादिनां मतस्य प्रतिपादने ध्वनिकृता वाग्विकल्पामानन्त्येनालङ्काराणाम् आनन्त्यं सूचितम् ।

'' मुखं चन्द्र इव '' इत्यत्रोपमा, मुखं चन्द्रः इत्यत्र रूपकं मुख चन्द्रश्च प्रकाशते इत्यत्र मुखचन्द्रयोः प्रस्तुतत्वे प्रकाशनरूपेनैकेन धर्मेण सम्बन्धात् तुल्ययोगितितेत्यादिरूपेणोक्ति प्रकाराणां भेदेनाङ्कारभेदः स्फुट एव।

भामहमनुसृत्य अन्येऽपि अलङ्कारपक्षपातिन आचार्याः स्व-स्व ग्रन्थे अलङ्काराणां विशदं विवेचनं कृतवन्तः, अथ च काव्येषु अलङ्काराणां अनिवार्यतया स्थितिः तैः प्रतिपादिता । रुद्रटेन भावनाम्नि अलङ्कारे सर्वस्यापि प्रतीयमानार्थस्यान्तर्भावं विधाय अलङ्कार एव काव्यस्य प्राणत्वेन निर्धारितः । अत एव आचार्यरुय्यकः ''अलङ्कारसर्वस्य '' इत्यस्मिन् ग्रन्थे कथयति-

**''इह तावद् भामहोद्भटप्रभृतयश्चिरन्तनालङ्कारिकाः प्रतीयमानार्थं वाच्योपस्कारक-तयालङ्कारपक्षनिक्षिप्तं मन्यते । रुद्रटेन तु भावालङ्कारो वाच्योपस्कारत्वेननोक्तः । उत्प्रेक्षा तु स्वमेव प्रतीयमाना कथिता । रसत्प्रेयः प्रभृतौ तु रसभावादिर्वाच्यशोभाहेतुत्वेनोक्तः । तदित्थं त्रिविधमपि प्रतीयमानमलङ्कारतया ख्यापितमेव । वामनेन तु सादृष्यनिबन्धनाया लक्षणाया वक्रकोक्तियलङ्कारत्वे ब्रुवता कश्चित् ध्वनिभेदोऽलङ्कारतयैयोक्तः । केवलं गुणविशिष्टपदरचनात्मिका रीतिः काव्यत्मत्वेनोक्ता । उद्भटादिभिस्तु गुणालङ्काराणां प्रायशः साम्यमेव सूचितम्। तदेवमलङ्कारा एव काव्ये प्राधानमिति प्राच्यानां मतम् ''।**[8]

उपर्युक्तविवेचनेन निष्पद्यते यदलङ्कारवादिभाराचार्यैः काव्येषु अलङ्कारस्यैव प्राधान्यं स्वीकृतम् । ते काव्येषु अलङ्कारमेवाङ्गिनं प्रतिपाद्य तं महत्तमं तत्त्वं प्रत्यपादयन्। भामह-दण्डयुदभट-रुद्रट-वामनादय आचार्या रसस्य प्राधान्यमुपेक्ष्य अलङ्काराणां प्रामुख्यमङ्गीकृतवन्तः । तैरलङ्कारा एव काव्यसर्वस्वमित्यपि उद्घोषितम् । काव्यशरीरमलङ्कारैरेव अलङ्क्रियते । अलङ्काराः काव्यसौन्दर्यस्योत्कर्षहेतवः काव्यशोभाधायकधर्माश्च सन्ति ।

शोधच्छात्रः, करणविभागे,
**रा.सं.सं., भोपालम्**

[8] अलङ्कारसर्ववस्वम्

